THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS.

*No. 19*

( PART I )

---

THE

# PRĀKṚITA PRAKĀŚA

GOVERNMENT SANSKRIT LIBRARY.

BENARES.

1927.



Price, Rs. 2-4-0.]

श्रीवररुचिविरचितः

# प्राकृतप्रकाशः

श्रीवसन्तराजकृत सञ्जीवन्याख्यया टीकया

तथा

श्रीसदानन्दकृत सुबोधिन्याख्यया टीकया च

सनाथीकृतः

# THE PRĀKṚITA PRAKĀS'A

OF

VARARUCHI

With the 'Sañjīvanī' of Vasantarāja

AND

The 'Subodhinī' of Sadānanda.

Edited with Introduction etc.,

BY

Batuk Nath Sharma, M. A., Sāhityopādhyāya,

AND

Baladeva Upādhyāya, M. A., Sāhitya S'āstrī,

Professors, Benares Hindu University.

*Published under the authority of the Government of the United Provinces by the Superintendent of Government Press, Allahabad.*

## PREFATORY NOTE

I have very great pleasure in presenting to the lovers of India and Indology, the first part of वररुचि's प्राकृतप्रकाश with two very important and hitherto unpublished commentaries, viz., प्राकृतसंजीवनी of वसन्तराज and सुबोधिनी of सदानन्द. As far as my knowledge of the published Catalogues of Manuscripts goes, I have found the former noticed only in the Catalogue of the India Office Library and the latter, not even mentioned in any of them. The two commentaries have nothing in common with, and are in many respects far superior to, the published commentary of भामह. The wealth of information about Prakrit Philology which the प्राकृत-संजीवनी reveals, entitles it to our special consideration. I hope this fact at least renders it superfluous to offer any apology for their publication.

My first interest in the प्राकृतसंजीवनी was created by reading the description of it as given by Cowell in the Introduction to his edition of प्राकृतप्रकाश. It was greatly increased by noticing the way it is referred to by later writers. These references, though a few in number, cannot but point to the fact that it was once looked upon as a very learned and authoritative work on Prakrit Grammar. I had been on the look-out and actually making a search here and there for a manuscript of this work for the last 15 years, but without any success at all. At last seeing no other better alternative, I thought I might have a look at the manuscript deposited in the India Office Library, just only to see what it was. The fact was that all my enthusiasm for it had been already chilled by Cowell's description and so naturally I could not hold out very high expectations of

it. I hope it will not be out of place to give here a little portion of his description:—"The only MS. of the Prakrit-Sañjivani which I have met with, (No. 1503 in the East India House Library ) is imperfect at the commencement, and is unfortunately very carelessly transcribed and is full of errors. Had it been accurate, it would have been of great service, as it seems to be a commentary on Vararuchi's Sutras which it generally gives in their proper order; but in some places with additions and alterations. The difficulty of deciphering the MS. has precluded my making that use of it which I would have otherwise done." I requested Pandit Gopi Nath Kaviraj for obtaining the manuscript on loan from the India Office Library. He, with his usual kindness, complied with my request. Our sincere thanks are due to the authorities of the India Office Library for the favour of sending the manuscript as promptly as they could.

But before it was actually to hand, I had here the good fortune of coming across two other manuscripts. My esteemed friend, Pandit Nārāyaṇa S'āstrī Khiste of the Government Sanskrit College Library, favoured me with the manuscript of the सुबोधिनी of सदानन्द. Being mainly based upon the प्राकृतसंजीवनी, it was of very great help to us. At that very time, another friend of mine, Pandit Jagannātha S'āstrī Hoshing, discovered in the pall-mall heap of manuscripts in the Sanskrit College Library, the first chapter of the प्राकृत-संजीवनी. It was a unique discovery. It was helpful in enabling me, not only to complete the portion which was wanting in the manuscript of the India Office Library, but also to get familiar with the script of that manuscript.

The Manuscript of प्राकृतसंजीवनी, belonging to the India Office Library, is a model of careless and slipshod penmanship. It is incomplete at the commencement and written in an extremely illegible script; the scribe has sometimes tried to test the imagination and memory of the readers by either leaving out or repeating letters, words, and even sentences. It originally belonged to Colebrooke who presented it to the India Office Library in 1821. For the last 106 years it has been lying there without attracting the notice of any editor towards it.

In spite of some helpful material here obtained and my efforts to wade through all the available Prakrit Grammars, the task of deciphering the manuscript would have been beyond my powers, had not my learned colleague, Professor Baladeva Upādhyāya, come to my help. His extraordinary knowledge of script and grammar, coupled with his usual habit of patient labour, has greatly contributed towards any success I may have been able to attain. I remember with a feeling of deep gratefuness how he willingly forewent the pleasure of going home and remained here, toiling over the manuscripts day and night in the burning heat of summer.

I hope I shall be excused for making these personal references which are required by the extraordinary circumstances. I shall have occasion, in the Introduction to follow, to say much about the present texts and their authors. For the present, therefore, I beg leave of my kind readers, introducing in the meanwhile वसन्तराज and सदानन्द to say what they can for themselves. I cannot conclude this short note without remembering those whose help has been of great advantage to me. The person, who deserves the foremost mention in this

connection is Professor Baladeva Upādhyāya, but as he has been always a brother-in-action to me, he would not, I am sure, relish very much any gratitude shown to him by me. So leaving him alone, I at once hasten to offer my best thanks to Pandit Nārāyaṇa S'āstrī Khiste who, with his characteristic politeness, allowed me, not only to utilise the resources available in his library, but also to draw upon his wide erudition. He favoured me this time with his own transcript of त्रिविक्रम's Grammar. I cannot forget Pandit Jagannātha S'āstrī Hoshing whose unfailing kind courtesy towards me has often enabled me to tide safely through many difficulties. Last and best of all, I may refer to the revered name of the learned editor of this series, but my gratitude towards him can never be sufficiently expressed in words.

Benares<br>Hindu University,<br>मौनी अमावस्या, १९८३<br>2nd February, 1927.

BATUK NATH SHARMA

# सूचीपत्रम्







# अथ प्राकृतप्रकाशः ।

## प्रथमः परिच्छेदः ।

### अज्विधिः ।

सञ्जीवनी ॥

श्रीमहागणपतये नमः ।

अज्विधिरयुक्तविधिः संयुक्तविधिस्ततस्तु सङ्कीर्णः ।
सुप्तिङ्धातुनिपातजविधयोऽष्टाविह परिच्छेदाः ॥

॥ सुबोधिनी ॥

श्रीसहस्रांशवे नमः ॥

प्रणम्य परमं धाम सदानन्देन तन्यते ।
वृत्तिः प्राकृतसूत्राणां शुद्धबोधानुबोधिनी ॥
अज्विधिरयुक्तविधिरथ संयुक्तविधिस्ततश्च सङ्कीर्णः ।
सुप्तिङ्धातुनिपातजविधयोऽष्टाविह परिच्छेदाः ॥

सिद्धशब्दः समाम्नायः ॥ प्रकृतिप्रत्ययविभागाः पाणिनीयानुसारेण वेदितव्याः । अथ तत्र महाराष्ट्री भाषाऽनुवर्ण्यते ॥

# आदेरतः ॥ १ ॥

सञ्जीवनी ।

अधिकारोऽयम् । इत ऊर्ध्वं यदनुक्रमिष्याम आदेरादिभूतस्यातोऽकारस्य तद्भवतीत्यधिकृतं वेदितव्यम् । आ परिच्छेदपरिसमाप्तेरादेरित्यस्याधिकारः । अत इत्यस्यादातो यथादिषु वेत्यतः प्राक् ।

सुबोधिनी ।

यद्वक्तव्यं कार्यं तदादिभूतस्याऽतोऽकारस्य वेदितव्यम् । अधिकारसूत्रमिदम् । आदेरित्यस्या परिच्छेदसमाप्तेरधिकारः ॥ अत इत्यस्य तु अदात इत्यादिसूत्रात् प्राक् ।

# आ समृध्द्यादिषु वा ॥ २ ॥

सञ्जीवनी ।

आदिशब्दः प्रकारे । प्रकारः सादृश्यम् । तथा चोक्तम्—

सामीप्येऽथ व्यवस्थायां प्रकारेऽवयवे तथा ।
आदिशब्दं तु मेधावी चतुर्ष्वर्थेषु लक्षयेत् ॥

तेन समृद्धिशब्देन सदृशाः समृद्ध्यादयः । तेषु समृद्ध्यादिषु शब्देष्वादेरादिभूतस्यातोऽकारस्याऽऽका-

रादेशो भवति वा । सामिद्धी समिद्धी समृद्धिः । सुप्रत्यये कृते स्वजातीयापेक्षया आदिभूतस्याकारस्यानेन वा आत्वम् । एवमन्येषूदाहरणेषु । इदृष्यादिषु वेति ऋकारस्येत्वम् । सुभिस्सुप्सु दीर्घ इति दीर्घत्वम् । अन्त्यस्य हल इति सुप्रत्ययस्य लोपः । पाडिसिद्धी पडिसिद्धी प्रतिषिद्धिः । सर्वत्र लवरामिति रलोपः । प्रतिसरवेतसपताकासु डः इति तकारस्य डः । शषोः स इति षस्य सः । दीर्घसुलोपौ पूर्ववत् । एवं पासिद्धी पसिद्धी प्रसिद्धिः । माणंसिणी मणंसिणी मनस्विनी । वक्रादिष्विति नात्परोऽनुस्वारः । सर्वत्र लवरामिति वलोपः । नो णः सर्वत्रेति नद्वयस्य प्रत्येकं णः । आहिआअं अहिआअं अभिजातम् । कगचजतदपयवां प्रायो लोप इत्यादिना अनयोर्जतयोर्लोपः । खघथधभामित्यादिना भस्य हः । नपुंसके सोर्बिन्दुरिति बिन्दुः । पासुत्तं पसुत्तं प्रसुप्तम् । सर्वत्र लवरामिति रलोपः । उपरि लोप इत्यादिना पलोपः । शेषादेशादिना तकारस्य द्वित्वम् । पूर्ववत् सोर्बिन्दुः । पाडिवआ पडिवआ प्रतिपत् । पूर्ववत् रलोपः । प्रतिसरवेतसपताकासु ड इति तस्य डः । पो वः इति पस्य वः । आदेस्तस्य न भवति तत्रायुक्तस्यानादाविस्यधिकारात् । स्त्रियमादित्यस्यान्त्यस्य हलः तस्य

आत्वम् । अन्त्यस्य हल इति सुलोपः । पाअडं पअडं प्रकटम् । कगचजादिना कलोपः । टो ड इति डः । सारिच्छं सरिच्छं सदृक्षम् । क्वचिद्युक्तस्यापीति ऋका-रस्य रिः । अक्ष्यादिषु छ इति छः । तस्य द्वित्वे वर्गे युजः पूर्वः इति चकारः ।

समृद्धिः प्रतिषिद्धिश्च प्रसिद्धिश्च मनस्विनी ।
अभिजातं प्रसुप्तं च प्रतिपत् प्रकटं तथा ॥
सदृक्षश्चैवमादिः स्यात् समृद्ध्यादिगणः किल ॥

वाशब्दस्य व्यवस्थावाचित्वात् क्वचिन्नित्यमात्वम् । वासस‌अं वासारत्तो वर्षशतवर्षारात्रयोः । शषोः स इति शषयोः सः । अदातो यथादिषु वेत्यत्र वा आ-त्वम् । सर्वत्र लवरामिति तयोः रेफलोपः । तत्रोपर्यध इत्यनुवृत्तेः केवलानां लवरां लोपाभावः । शेषादेशा-दिना तकारस्य द्वित्वम् । उभयत्रापि सकारस्य न भवति । 'विन्ध्यादीदूत्परस्येह द्वित्वं शेषस्य ने-ष्यते' इति द्वित्वप्रतिषेधात् । पासिण्णं सासू प्रस्विन्न-श्वश्रूशब्दयोः ।

सुबोधिनी ।

समृद्ध्यादिर्गणस्तस्याऽऽदेरकारस्याऽऽकारदेशो भवति वा ॥
समृद्धिः प्रतिषिद्धिश्च प्रसिद्धिश्च मनस्विनी ।
अभिजातं प्रसुप्तश्च प्रतिपत् प्रकटं तथा ॥

सदृक्षमिति संप्रोक्तः समृद्ध्यादिगणः किल ॥

सामिद्धी समिद्धी। पाडिसिद्धी पडिसिद्धी। पासिद्धी पसिद्धी। माणंसिणी मणंसिणी। आहिआअं अहिआअं। पासुत्तं पसुत्तं। पाडिवआ पडिवआ। पाअडं पअडं। सारिच्छं सरिच्छं। वाशब्दस्य व्यवस्थावाचित्वात् क्वचिन्नित्यमात्वम्। यथा वासस‌अं, वासारत्तं वर्षशतं वर्षारात्रम्। पासिण्णं प्रस्विन्नं। सासू श्वश्रूः। एवमन्ये लक्ष्यानुसारेण बोद्धव्याः॥

## इदीषत्पक्कस्वप्नवेतसव्यजन-मृदङ्गाङ्गारेषु च॥ ३॥

संजीवनी।

ईषदित्यादिषु सप्तसु शब्देष्वादेरतः स्थाने इद् भवति। तकार उच्चारणार्थः। चकारादनादेरपि। ईसि ईषत्। सुप्रत्यये कृते अन्त्यस्य हल इति प्रत्येकं सुतकारयोर्लोपः। पिक्कं पक्वम्। सर्वत्र लवरामिति वलोपः। शेषादेशयोरित्यादिना ककारस्य द्वित्वम्। सिविणो स्वप्नः। पूर्ववत् लोपः। आदेरस्य इत्वम्। श्रीह्री इत्यादिना पवयोर्विकर्षः। पूर्वस्य इकारः। पो वं इति वः। नो ण इति णः। अत ओ सोरित्योत्वम्। वेडिसो वेतसः। प्रतिसरवेतसेत्यादिना तस्य डः।

मध्ये अस्येत्वम् । विअणअं व्यजनकम् । अधो मन-यामिति यलोपः । स्वार्थे को वेति कप्रत्ययः । जस्य कगचादिना लोपः । मुइंगो मृदङ्ग । उदृत्वादिषु इति ऋकारस्य उत्वम् । दलोपावशिष्टस्य अकारस्ये-त्वम् । नञोर्हलीति ङःस्थाने बिन्दुः । तस्य कपि तद्वर्गा-न्त इति वा ङत्वम् । इंगालो अङ्गारः । हरिद्रादीनां रो ल इति लः । पूर्ववदन्यत् । अङ्गारशब्दः संस्कृतसमो-ऽपीति केचित् ।

चकारान्मध्यतोऽस्येत्वं मध्यमे चरमे तथा ।

मज्झिमं मध्यमम् । ध्यह्ययोर्झ इति ध्यस्य झः । तस्य द्वित्वे वर्गे युजः पूर्व इति जः । चरिमं चरम् । चरमशब्दः सस्कृतसमोऽपि केचित् ।

सुबोधिनी ।

ईषदादिषु शब्देष्वादेरत इकारादेशः स्यात् ।
इसि । सिविणो । पिक्कं । वेडिसो । विअणं । मुइंगो ॥
इंगालो । अङ्गारशब्दः संस्कृतसमोऽपि क्वचित् ।
चकारान्मध्यगतस्याप्यकारस्येत्वं क्वचित् ॥
यथा मज्झिमं मध्यमं । चरिमं चरमं । चरमशब्दः संस्कृतसमोऽपि क्वचित् ।

# लोपोऽरण्ये ॥ ४ ॥

सञ्जीवनी ।

अरण्यशब्दे अकारस्य लोपो भवति । रण्णं अरण्यम् । अधो मनयामिति यलोपः । शेषादेशादिना द्वित्वम् । 'स्यादिदानींपदे लोपः आदेर्योगविभागतः' । दाणि इदानीम् । इतीतः पानीयादिषु इतीत्वम् । मो बिन्दुरित्यादिना बिन्दुः । तस्य मांसादित्वाल्लोपः ।

सुबोधिनी ।

अरण्यशब्दे आदेरतो लोपो भवति । रण्णं ॥
स्यादिदानींपदे लोप आदेर्योगविभागतः । दाणिं ।

# ए च शय्यादिषु ॥ ५ ॥

सञ्जीवनी ।

शय्याशब्देन सदृशाः शय्यादयः । तेषु शय्यादिषु आदेरकारस्य एकारादेशो भवति । चकारादनादेरपि । सेज्जा शय्या । आदेरकारस्यैत्वम् । यशय्याभिमन्युषु ज इति य इत्यस्य जः । शेषादेशादिना जस्य द्वित्वम् । सुंदेरं सौन्दर्य्यम् । उत्सौन्दर्यादिष्विति औकारस्योत्वम् । तूर्यधैर्यादिना र्यस्य रः । बेल्ली बल्ली । केत्तिअं कियत् । किं परिमाणमस्य किमो यत् । किंशब्दे किमः क इति कः । जेत्तिअं यावत् । यच्छब्दे

अन्त्यस्य हल इति तलोपः । आदेर्यो ज इति जः । तेत्तिअं तावत् । तच्छब्देऽपि पूर्ववत् तलोपः । 'इष्टौ किंयत्तदेतेभ्यः परिमाणे त्तिअड्डहाविति त्रिभ्योऽपि त्तिअप्रत्ययः । त्रयोमी त्तिआन्ताः । उक्केरो उत्करः । उपरि लोप इत्यादिना तलोपः । शेषादिना कस्य द्वित्वम् । मध्यस्यैत्वम् । अच्छेरं आश्चर्यम् । अदातो यथादिषु वेत्यत्वम् । श्चत्सप्सां छ इति श्चस्य छः । तस्य द्वित्वे वर्गे युजः पूर्व इति चः । तूर्यधैर्यादिना र्यस्य रः । थोअमेत्तं स्तोकमात्रम् । स्तस्य थः । कगचादिना कलोपः । अदातो यथादिषु वेत्यम् । वेण्टं वृन्तम् । ऋतोऽदित्यत्वेकृते एत्वम् । तालवृन्ते ण्ट इत्यत्र केवलवृन्तशब्दे ण्ट इति वक्ष्यते ।

शय्यासौन्दर्यपर्यन्तवल्लीत्रित्तिआन्तोत्कराः ।
आश्चर्यमात्रवृन्तानि शय्यादयः स्युरीदृशाः ॥

सुबोधिनी ।

आदेरत एत्वं स्यात् ॥
शय्यासौन्दर्यपर्यन्त वल्लीतितामितो (त्रित्तिआन्तो ?) त्कराः ।
आश्चर्यमात्रवृन्तानि ज्ञेयः शय्यादिरीदृशः ॥

सेज्जा, सुन्दरो, वेल्ली, केत्तिअं, जेत्तिअं, तेत्तिअं । अमी किंयत्तच्छब्दानां परिणामाः । उक्केरं, अच्छेरं, मात्रवृन्त-

शब्दयोरदातो यथादिषु ऋतोऽदितिसूत्राभ्यां कृताकारयोर्ग्रहणम् । थोअमेत्तं, वेण्ठं ॥ ५ ॥

# ओ बदरे देन ॥ ६ ॥

सञ्जीवनी ।

बदरशब्दे दकारेण सहादेरत ओत्वं भवति । बोरं बदरम् । नपुंसके सोर्बिन्दुरिति बिन्दुः । 'ओत्वं सह वकारेण लवणेऽप्यस्य चेष्यते' । लोणं लवणम् । 'आदेरोत्वं विकल्पेन स्यादार्द्रार्पितशब्दयोः' । ओल्लं अल्लं ओद्दं अद्दं आर्द्रम् । यत्र पक्षे ओत्वं नास्ति तत्र अदातो यथादिषु वेत्यत्वम् । द्रे रो वेति रेफलोपः । 'आर्द्रशब्दे दकारस्य लादेशो वेष्यते बुधैरिति वा लत्वम् । पक्षे सर्वत्र लवरामिति रलोपः । शेषादेशादिना द्वित्वम् । ओप्पिअं अप्पिअं अर्पितम् । लोपे द्वित्वं पूर्ववत् ॥ ६ ॥

सुबोधिनी ।

बदरे शब्दे दकारेण सह ओत्वं स्यात् । बोरं ॥
ओत्वं सह वकारेण लवणेऽप्यस्य चेष्यते । लोणं ।
आदेरोत्वं विकल्पेन स्यादार्द्रार्प्पितशब्दयोः ॥
ओल्लं अल्लं ओद्दं अद्दं । ओप्पिअं अप्पिअं ॥ ६ ॥

# मयूरमयूखयोर्य्वा वा ॥ ७ ॥

सञ्जीवनी ।

य्वा इति तृतीयान्तम् । ओ इत्यनुवर्तते उत्तरत्रापि। एतयोः शब्दयोः य्वा यूशब्देन सहादेरत ओत्वं वा भवति । मोरो मऊरो मयूरः । अकारयकारयोरेकत्र ओत्वम् । तेन मस्य सस्वरत्वम् । अन्यत्र कगचादिना यलोपः । मोहा मऊहा मयूखाः । जस्प्रत्यये कृते खघथादिना खस्य हः । जस्शसोर्लोप इति जसो लोपः । ततः प्रत्ययलोपपरिभाषया जश्ङस्यांसु दीर्घ इति दीर्घः । पूर्ववदोत्वम् ॥ ७ ॥

सुबोधिनी ।

मयूरमयूखशब्दयोः यूशब्देन सह आदेरत ओत्वं स्याद्वा । मोरो मऊरो । मोहो मऊहो ॥ ७ ॥

# चतुर्थीचतुर्दश्योस्तुना ॥ ८ ॥

सञ्जीवनी ।

तुनेति तृतीयान्तम् । वेत्यनुवर्तते । एतयोः शब्दयोस्तुना तुशब्देन सहादेरत ओत्वं वा भवति । चोत्थी चउत्थी चतुर्थी । अकारोकारयोरेकत्र ओत्वम् ।

अन्यत्र कगचादिना तलोपः । चोद्दही चउद्दही चतुर्दशी । दशादिषु ह इति शस्य हः । पूर्ववदन्यत् । अन्त्यस्य हल इति सुलोपः ॥ ८ ॥

सुबोधिनी ।

चतुर्थीचतुर्दशीशब्दयोः तुशब्देन सह आदेरत ओत्वं स्याद्वा । चोत्थी चउत्थी । चोद्दही चउद्दही ॥ ८ ॥

# अदातो यथादिषु वा ॥ ९ ॥

सञ्जीवनी ।

अत इति निवृत्तम् । यथा इत्येवंप्रकारेषु शब्देषु आत आकारस्य अकारादेशो भवति । वाशब्देऽनुवर्तमाने पुनर्वाग्रहणात् अनादेरपि । स्थान्यादेशयोस्तकारोऽसन्देहार्थः । जह जहा यथा । आदेर्यो ज इति जः । तह तहा तथा । खघथादिना थस्य हः । पवहो पवाहो प्रवाहः । पहरो पहारो प्रहारः । पअअं पाअअं प्राकृतम् । ऋतोऽदित्यत्वम् । कगचादिना कतयोर्लोपः । पत्थरो पत्थारो प्रस्तारः । स्तस्य थ इति थः । तस्य द्वित्वे वर्गे युजः पूर्व इति तः । परिआओ पारिआओ पारिजातः । कगचादिना जतयोर्लोपः । चमरं चामरं चामरमेव । उक्खओ उक्खाओ उत्खातः ।

उपरिलोप इत्यादिना तलोपः। शेषस्य खस्य द्वित्वे वर्गे युजः पूर्व इति कः। हलिओ हालिओ हालिकः। व्यवस्थितविभाषया ब्राह्मणादौ तु नित्यमः। बम्हणो ब्राह्मणः। ह्नह्मेष्वित्यादिना हस्योपरि मस्थितिः। ठाविओ स्थापितः। ष्ठा गतिनिवृत्तावित्यस्य णिजन्तस्य क्तप्रत्यये परे आविः क्ते इत्यादिना णिच आविरादेशः। अइदेशा बहुलमिति बहुलग्रहणात् स्थाध्यागा इत्यादिना स्था इत्यस्य ठादेशः। सन्धावचामित्यादिना आवेराकारलोपः। कगचादिना तलोपः। ब्राह्मणादित्वात् आकारस्य नित्यमत्वम्। अथवा स्थापितशब्दस्य संस्कृतसिद्धस्यैवाङ्गीकारात्। अन्यत्रापि क्वचित् ठत्वं स्थकारस्येष्यते बुधैः॥

इति स्थस्य ठः। पो व इति वः। पूर्ववदन्यत्। पत्तं प्राप्तम्। उपरि लोप इत्यादिना पलोपः। शेषादिना तस्य द्वित्वम्। पंसू पांशुः। सुभिस्सुप्सु दीर्घ इति दीर्घः। अच्छारिअं आश्चर्यं। श्चत्सप्सां छ इति श्चस्य छः। चौर्यसमेषु रिअ इति र्यस्य रिअआदेशः। पुव्वण्हो पूर्वाह्णः। उदूतो मधुकादिषु इति उत्वम्। ह्नह्मेष्वित्यादिना हस्योपरि णस्य स्थितिः। मज्झण्णो मध्याह्नः। ध्यह्योर्झः इति ध्यस्य झः। अस्य द्वित्वे वर्गे युजः पूर्व इति जः। मध्याह्ने हस्य इति हलोपः। नो

ण इति णः । तस्य शेषादेशादिना द्वित्वम् । अवरण्हो अपराह्णः ।

यथा तथा प्रवाहश्च प्रहारप्राकृते अपि ।
प्रस्तारः पारिजातश्च चामरोत्खातहालिकाः ॥
यथादयः स्युरिद्दक्षा एषां ह्रस्वो विभाषया ॥
ब्राह्मणः स्थापितः प्राप्तपांश्वाश्चर्यादयश्च ये ।
ये पूर्वाह्णादयस्तेऽपि नित्यं ह्रस्वा यथादिषु ॥ ९ ॥

सुबोधिनी ।

अत इत्यधिकारो निवृत्तः । यथादिष्वादेराकारस्य अकारादेशः स्याद्वा ।

यथा तथा प्रवाहश्च प्रहारप्राकृतेष्वपि ।
प्रस्तावः पारिजातश्च चामरोत्खातहालिकाः ॥
यथादयः स्युरिद्दक्षा येषां ह्रस्वो विकल्प्यते ।

जह जहा । तह तहा । पवहो पवाहो । पहरो पहारो । पउअं पाउअं । पत्थवो पत्थावो । परिआओ पारिआओ । चमरं चामरं । उक्खओ उक्खाओ । हलिओ हालिओ ॥ अत्र वाशब्देऽनुवर्त्तमानेऽपि पुनर्वाग्रहणं यथादिष्वेव ह्रस्वत्वविकल्पसंकोचार्थम् ॥ तथा चोक्तम् ॥

ब्राह्मणः स्थापितप्राप्तपार्श्वाश्चर्यादयश्च ये ।
ये पूर्वाह्णादयस्तेऽपि नित्यं ह्रस्वा यथादिषु ॥

वंम्हणो ।ठविओ । पत्तं । पंम्नू । अच्छरिअं। पुव्वण्हो । मज्झण्णो ॥ अवरण्हो ॥ एते च पूर्वाह्णादयः ॥ ९ ॥

# इत् सदा ॥ १० ॥

सञ्जीवनी ।

सदा इति लुप्तसप्तम्यन्तम् । आत इत्यनुवर्तते वेति च । सदाशब्दे आकारस्य इदादेशो भवति वा । सइ सआ सदा । कगचादिना दलोपः ॥ १० ॥

सुबोधिनी ।

सदेति लुप्तसप्तम्यन्तं पदम् । सदाशब्दे आदेः आत इत्स्यात् वा ॥ सइ सआ । आत इत्यधिकारो निवृत्तः ॥ १० ॥

# इत एत् पिण्डसमेषु ॥ ११ ॥

सञ्जीवनी ।

वेत्यनुवर्तते । पिण्ड इत्येवं सदृशेषु शब्देषु इकारस्य एत्वं वा भवति । पेण्डं पिण्डं पिण्डमेव । सेंदूरं सिंदूरं सिन्दूरमेव । नञो हलीति नस्य बिन्दुः । तस्य कपि तद्वर्गान्त इति वा नत्वम् । धम्मेल्लो धम्मिल्लो धम्मिल्ल एव । वेण्हू विण्हू विष्णुः । ह्लस्नष्णक्ष्णश्नां इति ष्णशब्दस्य ण्ह आदेशः । सुभिस्सुप्सु दीर्घ इति

दीर्घः। अन्त्यस्य हल इति सुलोपः। बेल्लं विल्लं बिल्वम्
सर्वत्र लवरामिति वलोपः। शेषादेशादिना लस्य
द्वित्वम्। वेट्ठी विट्ठी विष्टिः। ष्टस्य ठ इति ठः।

पिण्डसिन्दूरधम्मिल्लविष्णुबिल्वाः सविष्टयः।
इत्याद्याः पिण्डतुल्याः स्युर्येषामेत्वं विभाषया॥
व्यवस्थितविकल्पत्वात् किंशुके नित्यमेदितः।

केसुओ किंशुकः। मांसादिषु वेति बिन्दुलोपः॥११॥

सुबोधिनी।

पिण्डसमेषु इत इकारस्य एत्वं स्याद्वा॥

पिण्डसिंदूरधम्मिल्लविष्णुविल्वा सविष्टयः।
इत्याद्याः पिण्डतुल्याः स्युर्येषामेत्वं विधीयते॥

पेंडं पिंडं। सेंदूरं सिंदूरं। धम्मेल्लो धम्मिल्लो। वेण्हू
विण्हू। वेल्लं विल्लं। वेट्ठी विट्ठी।

व्यवस्थितविकल्पत्वात् किंशुके नित्यमेदितः॥ केसुअं॥११॥

# अत् पथिहरिद्रापृथिवीषु॥ १२॥

सञ्जीवनी।

इत इत्यनुवर्तते ईत् सिंहजिह्वयोरिति यावत्।
एषु शब्देष्विकारस्य अकारादेशो भवति। पहो पन्थाः।
नस्रोर्हलीति नस्य बिन्दुः। तस्य मांसादिसु वेति लोपः

खघथादिना थस्य हः। अनेन इकारस्य अत्वम्। तस्य अकारस्य क्वचिदपि लोप इति लोपः। हलद्दा हलद्दी हरिद्रा। हरिद्रादीनां रो लः इति लः। द्रे रो वेति रेफ-लोपः। यदा हलद्दीति, तदाऽऽदीतौ बहुलमिति ईप्रत्ययः। पुहवी पृथिवी। उदृत्वादिष्विति ऋकारस्य उः॥१२॥

सुबोधिनी ।

एष्वित्कारस्याऽकारादेशः स्यात् ॥ पहो । हलद्दा । पुहवी ॥ १२ ॥

# इतेस्तः पदादेः ॥ १३ ॥

सञ्जीवनी ।

अदित्यनुवर्तते। आदिभूत इतेः इतिशब्दसम्बन्धी यस्तिकारः तस्य इस्थाने अकारादेशो भवति । इअ विहसन्तो अहअं। कगचादिना तलोपः। आदे रिति किम्? हरो त्ति हर इति। हरशब्द अत ओत् सोरित्योत्वम् । इतिशब्दे नीडादिष्विति तस्य द्वित्वम्। ततः सन्धावचामित्यादिना इकारलोपः। एवं सुजणो त्ति सुजन इति। तेरिति किम्? आदेरिकारस्य मा भूत् ॥ १३ ॥

सुबोधिनी ।

आदिभूतस्य इतिशब्दस्य यस्तिस्तस्याऽकारादेशः स्याद्वा ॥ इअ विहसंतो सुहवं ॥ आदेरिति किम् ? हरो त्ति हर इति । एरिति वक्तव्ये तेरिति तकारग्रहणं किम् ? प्रथमेकारस्य मा भूदिति ॥१३॥

# उदिक्षुवृश्चिकयोः ॥ १४ ॥

सञ्जीवनी ।

एतयोरिकारस्य उत्वं भवति । उच्छू इक्षुः । अक्ष्यादिषु छ इति क्षस्य छः । तस्य द्वित्वे वर्गे युजः पूर्व इति चः । सुभिस्सुप्सु दीर्घ इति दीर्घः । विञ्छुओ वृश्चिकः । वृश्चिके ञ्छ इति श्चस्य ञ्छः । इदृष्यादिषु वेति ऋकारस्य इत्वम् । कगचादिना कलोपः ॥१४॥

सुबोधिनी ।

एतयोः शब्दयोरिकारस्योत्त्वं स्यात् ॥ उच्छू । विञ्छुओ॥१४॥

# ओ च द्विधाकृञः ॥ १५ ॥

सञ्जीवनी ।

उदित्यनुवर्तते । कृञः डुकृञ् करणे इत्यस्य धातोः सम्बन्धिनो द्विधा इत्येतस्य यः इकारस्तस्य उकारादेशो

२

भवति ओंकारादेशश्च । दुहाइअं दोहाइअं द्विधा-कृतम् । सर्वत्र लवरामिति वलोपः । खघथादिना धस्य हः । इदृष्यादिषु वेति ऋकारस्य इत्वम् । 'ओत्वं सह नकारेण स्यादितो निर्ज्झरेऽपि वा' । ओज्झरो णिज्झरो निर्झरः । सर्वत्र लवरामिति रेफलोपः । शेषस्य द्वित्वे वर्गे युजः पूर्व इति जः ॥१५॥

सुबोधिनी ।

कृञ इत्यस्य धातोरुपपदस्य द्विधाशब्दस्येकारस्तस्य ओत्वं स्यात् चकारादुत्वमपि ॥ दोहाइअं दुहाइअं द्विधाकृतम् । 'ओत्वं सह नकारेण स्यादितो निर्ज्झरे ऽपि वा' ॥ ओज्झरो णिज्झरो ॥१५॥

## ईत् सिंहजिह्वयोः ॥१६॥

सञ्जीवनी ।

इत इत्येव । एतयोः शब्दयोः इकारस्य ईकारा-देशो भवति । सीहो सिंहः । मांसादिषु वेति बिन्दु-लोपः । जीहा जिह्वा ॥१६॥

सुबोधिनी ।

अनयोरिकारस्य ईकारः स्यात् । सीहो । जीहा । इत इत्य-धिकारो निवृत्तः ॥१६॥

## उदुत उपसर्गे विसर्जनीयेन ॥१७॥

सञ्जीवनी ।

हलि श्रुतानुमिताध्याहारैर्वाक्यार्थपरिकल्पने हलीत्यध्याह्रियते उत्तरत्र च । उपसर्गे यो विसर्जनीयः तेन सह वर्तमानस्य आदिभूतस्य उत उकारस्य ऊत् ऊकारादेशो भवति हलि परतः । दूसिक्खिअं दुःशिक्षितम् । शषोः स इति शस्य सत्वम् । ष्कस्कक्षां ख इति क्षकारस्य खकारः । तस्य शेषादेशादिना द्वित्वम् वर्गे युजः पूर्व इति ककारः । कगचादिना तलोपः । सूहवा सुभगा । खघथादिना भस्य हः । 'सुभगाया भवत्यत्र दुर्भगायाश्च गस्य वः' इति गकारस्य वकारः । ननु कथमत्र ऊकारो विसर्जनीयाभावादिति चेत् ? विसर्जनीयेन तत्साहित्याविवक्षणात् । हलीति किम् ? दुराआरो दुराचारः । कगचादिना चलोपः । अत ओत् सोरिति ओत्वम् । 'ऊदुतः सविसर्गस्य दुःसहादौ विभाषया' । दूसहो । ऊत्वाभावपक्षे तु । 'लुग्वा दुरुपसर्गस्य विसर्गस्य क्वचिद् भवेत्' । इति विसर्गलोपे दुसहो दुःसहः । 'ऊदुतः सविसर्गस्य दुर्जनादिषु नेष्यते' । इति निषेधात् दुज्जणो दुर्जनः । सर्वत्र लवरामिति रेफलोपः । शेषस्य द्वित्वम् । नो णः इति नस्य णः । दुब्भरो दुर्भरः । रेफलोपशेषद्वित्वादिकं पूर्ववत् । दुत्तरो दुस्तरः ॥१७॥

सुबोधिनी ।

अत्र हलीत्यध्याहार्य्यं प्रयोगाऽनुरोधात् । उपसर्गे स्थितस्य उत उकारस्यादिभूतस्य विसर्जनीयेन सह ऊत् ऊकारादेशः स्याद्धलि परतः॥ दूसिक्खिअं दुःशिक्षितं। सूहवा सुभगा। ननु चात्र कथमूकारो विसर्जनीयाभावादिति ? विसर्जनीयेन तत्साहित्याविवक्षणात् । हलीतिकिम् ? दुराआरो दुराचारः । 'ऊदुतः सविसर्गस्य दुःसहादौ विभाषया' । दूसहो। ऊत्वाभावपक्षे 'लुग्वा दुरुपसर्गस्य विसर्गस्य कचिद्भवेत्' । दुसहो दुःसहः । 'ऊदुतः सविसर्गस्य दुर्जनादिषु नेष्यते' । दुज्जणो दुर्जनः दुब्भरो दुर्भरः दुत्तरो दुस्तरः ॥१७॥

## ईदितः ॥ १८ ॥

सञ्जीवनी ।

उपसर्गे स्थितस्यादेरितः इकारस्य विसर्जनीयेन सह ईत् ईकारादेशो भवति । णीसंगो निःसङ्गः । नो णः इति नस्य णः । अत ओत् सोरित्योत्वम् । हलीत्यत्रापि अनुवर्तते तेन णिरन्तरो निरन्तरः । णत्वमोत्वं च पूर्ववत् । 'ईदितः सविसर्गस्य निर्धनादिषु नादृतः' णिद्धणो निर्धनः । सर्वत्र लवरामिति रेफलोपः । धषस्य द्वित्वे वर्गे युजः

पूर्व इति दः । नो णः इति नयोः णौ । णिग्गओ निर्गतः। रेफलोपशेषद्वित्वे पूर्ववत्। कगचादिना तलोपः। अत ओत् सोरित्योत्वम्। 'ईदूतावितुतोः स्थाने स्यातां लक्ष्यानुरोधतः'। वीसासो विश्वासः। सर्वत्र लवरामिति वलोपः। शस्य सः। वीसंभो विश्रम्भः। सर्वत्र लवरामिति रेफलोपः। मो बिन्दुरिति मस्य बिन्दुः। ऊसुओ ऊसओ उत्सुकोत्सवयोः। नोत्सवोत्सुकयोरिति छत्वनिषेधः। कगचादिना ककारवकारयोः लोपः। उपरिलोप इत्यादिना तलोपे कृते 'बिन्द्वादीदूत्परस्येह द्वित्वं शेषस्य नेष्यते' इति सस्य द्वित्वं न भवति ॥१८॥

सुबोधिनी।

उपसर्गे स्थितस्यादेरित इकारस्य विसर्जनीयेन सह ईकारादेशो भवति। णीसंगो निःसंगः। हलीति वर्त्तते तेन णिरन्तरो निरन्तरः। 'ईदितः सविसर्गस्य निर्धनादिषु नादृतः'। णिद्धणो निर्द्धनः। णिग्गओ निर्गतः। णिद्दओ निर्दयः। 'ईदूतावितुतोः स्थाने स्यातां लक्ष्यानुरोधतः'। वीसासो। विश्वासः। वीसंभो। विस्रम्भः। ऊसुओ ऊसओ उत्सुकोत्सवयोः ॥१८॥

# इदीतः पानीयादिषु ॥ १९ ॥

सञ्जीवनी ।

पानीयादिषु ईतः ईकारस्य इत् इकारागमः स्यात् पाणिअं पानीयम् । नो णः इति नस्य णः । कगचादिना यलोपः । विलिअं व्रीडितं । सर्वत्र लवरामिति रेफलोपः । डस्य चेति डस्य लः । तस्य कगचादिना लोपः । अलिअं अलीकम् । दुइअं द्वितीयं । तकारयकारयोः कगचादिना लोपः । तइअं तृतीयं । ऋतोऽदिति ऋकारस्य अः । द्वितीयतृतीयशब्दौ तीयप्रत्ययान्तौ । दाणि इदानीं । णिरिक्खिओ निरीक्षितः । ष्कस्कक्षां ख इति क्षस्य खः । तस्य द्वित्वे वर्गे युजः पूर्व इति कः । नो ण इति नस्य णः । तस्य कगचादिना लोपः । गहिअं गृहीतं । ऋतोऽदिति ऋकारस्य अत्वम् गहिरं गंभीरं । खघथादिना भस्य हः । मांसादिषु वेति बिन्दुलोपः । आणिअं आनीतम् ।

पानीयव्रीडितालीकतीयेदानींनिरीक्षिताः ।
गृहीतानीतगंभीराः पानीयादय ईदृशाः ॥१९॥

सुबोधिनी ।

पानीयादिष्वीकारस्य इकारादेशः स्यात् ।
पानीयव्रीडितालीकतीयेदानींनिरीक्षिताः ।
गृहीतानीतगंभीराः पानीयादय ईदृशाः ॥
पाणिअं । विलिअं । अलिअं । दुइअं । तइअं ।

द्वितीयतृतीययोस्तीयप्रत्ययान्तयोः। दाणि। णिरिक्खिओ। गहिरं ॥१९॥

## एन्नीडापीडकीदृगीदृशेषु ॥२०॥

सञ्जीवनी।

एषु ईकारस्य एत्वं स्यात्। णेड्डं नीडं। नो णः इति नस्य णः। नीडादिष्विति डस्य द्वित्वम्। आमेलो आपीडः। आपीडे म इति पकारस्य मः। डस्य लः ; अत ओत् सोरिति ओत्वम्। केरिसो कीदृशः। क्वचिद्युक्तस्यापीति ऋकारस्य रिः। शषोः स इति शस्य सः। एरिसो ईदृशः। ऋकारस्य रित्वं पूर्ववत् ॥२०॥

सुबोधिनी।

एष्वीकारस्य एत्वं स्यात्।
णेड्डं। आमेलो। केरिसो। एरिसो ॥२०॥

## उत ओत् तुण्डसमेषु ॥२१॥

सञ्जीवनी।

तुण्डसदृशेषु शब्देषु उतः उकारस्य ओकारः स्यात् तोंडं तुण्डं। पोक्खरो पुष्करः। ष्कस्कक्षां ख इति स्कस्य

खः । तस्य द्वित्वे वर्गे युजः पूर्व इति कः । मोत्थं मुस्तम् स्तस्य थ इति थः । तस्य आदेशत्वात् द्वित्वे वर्गे युजः पूर्व इति तः । पोत्थअं पुस्तकं । स्तस्य थकारादिकं पूर्ववत् मोग्गरो मुद्गरः । उपरि लोप इत्यादिना दस्य लोपः । शेषस्य गस्य द्वित्वम् । लोद्धओ लुब्धकः । सर्वत्र लवरामिति वलोपः । शेषस्य धस्य द्वित्वे वर्गे युजः पूर्व इति दः । कगचादिना कलोपः । सोमालो सुकुमारः । कगचादिना कलोपः । ततः सन्धावचामित्यादिना उकारस्य लोपः । हरिद्रादीनां रो ल इति रेफस्य लः ।

तुण्डः पुष्करशब्दश्च मुस्तपुस्तकमुद्गराः
लुब्धकः सुकुमारश्च तुण्डतुल्याः स्युरीदृशाः ॥२१॥

सुबोधिनी ।

तुण्डतुल्येषु शब्देषु उकारस्य ओत्वं स्यात् ।
तुण्डःपुष्करशब्दश्च मुस्तपुस्तकमुद्गराः ।
लुब्धकः सुकुमारश्च तुण्डतुल्या स्युरीदृशाः ॥
तोंडं । पोक्खरो । मोत्थं । पोत्थअं । मोग्गरो । लोद्धओ । सोमालो ॥२१॥

# उलूखले ल्वा वा ॥२२॥

सञ्जीवनी ।

उलूखलशब्दे ल्वा लूकारेण सह आदेः उकारस्य

ओत्वं वा भवति । ओहलं उलूहलं । खघथादिना खस्य हः ॥२२॥

सुबोधिनी ।

उलूखलशब्दे ल्वा लूकारेण सह उकारस्य ओत्वं वा स्यात् । ओहलं ऊलूहलं ॥२२॥

# अन्मुकुटादिषु ॥२३॥

सञ्जीवनी ।

मुकुटादिषु शब्देषु आदेरुकारस्य अत् अकारादेशः स्यात् । मउडं मुकुटं । कगचादिना कलोपः । टो ड इति टस्य डः । मउलं मुकुलं । सोअमल्लं सौकुमार्यम् । कगचादिना कलोपः । औत ओदिति ओत्वम् । अदातो यथादिषु वेति आकारस्य अकारः । पर्यस्तपर्याणसौकुमार्येषु लः इति र्यस्य लः । तस्य आदेशत्वात् द्वित्वम् । अवरि उपरि । पो व इति पस्य वः । गरुअं गुरुकं । 'बाहुशब्देऽप्युकारस्य विकल्पादत्त्वमिष्यते' । बाहा-बाहू ।

मुकुटं मुकुलं चैव सौकुमार्यं तथोपरि ।
शब्दज्ञा गुरुबाह्वादीन् मुकुटादीन् प्रचक्षते ॥२३॥

सुबोधिनी ।

एष्वादेरुतोऽकारादेशः स्यात् ॥

मुकुटं मुकुलं चैव सौकुमार्यं तथोपरि ।

शब्दज्ञा गुरुबाह्वादीन् मुकुटादीन् प्रचक्षते ॥

मउडं । मउलं । सोअमल्लं । अवरि । गरुअं । 'बाहुशब्दे-प्युकारस्य विकल्पादत्त्वमिष्यते' । बाहा बाहू ॥२३॥

# इत् पुरुषे रोः ॥२४॥

सञ्जीवनी ।

अत्र पुरुषशब्दे रुकारे उकारस्य इत् इकारः स्यात् । पुरिसो पुरुषः । शषो सः इति षस्य सः ॥२४॥

सुबोधिनी ।

अत्र रुकार उकारस्य इत्वं स्यात् । पुरिसो ॥२४॥

# उदूतो मधूकादिषु ॥२५॥

सञ्जीवनी ।

एषु शब्देषु ऊतः ऊकारस्य उत् उकारःस्यात् । महुओ मधूकः । खघथादिना घस्य हः । कस्य कगचादिना लोपः । मुक्खो मूर्खः । सर्वत्र लवरामिति रेफस्य लोपः ।

खस्य शेषस्य द्वित्वम् । तस्य वर्गे युजः पूर्व इति कः । कुम्हण्डं कूष्माण्डं । ष्मपक्ष्मविस्मयेषु म्हः इति ष्मस्य म्हः । अदातो यथादिषु वेति आकारस्य अकारः । सुद्दो शूद्रः । सर्वत्र लवरामिति रेफलोपः । शेषस्य दस्य शेषादेशादिना द्वित्वम् । शषोः स इति शस्य सः । उद्धं ऊर्ध्वं । सर्वत्र लवरामिति रेफवकारयोर्लोपः । ततः धस्य द्वित्वे वर्गे युजः पूर्व इति दः । पुत्तो पूर्तः । रेफलोपः शेषद्वित्वं च प्राग्वत् । मुत्ती मूर्तिः । सर्वत्र लवरामिति रेफलोपः । शेषस्य तस्य द्वित्वम् । सुभिस्सुप्सु दीर्घ इति इकारस्य दीर्घः । अन्त्यस्य हल इति सुलोपः । भुज्जं भूर्जं । रेफलोपादिकं पूर्ववत् । सुण्णं शून्यम् । अधो मनयामिति यलोपः । नो णः इति नस्य णः । ततः शेषादेशादिना द्वित्वम् । उम्मओ ऊर्म्मयः । सर्वत्र लवरामिति रेफलोपः । ततः जसो वेति जसः ओत्वम् । चुण्णं चूर्णं । रेफलोपादिकं पूर्ववत् । उण्णा ऊर्णा ।

मधूकमूर्खकूष्माण्डशूद्रोर्द्धपूर्तमूर्तयः
भूर्जशून्योर्मिचूर्णोर्णा मधूकादय ईदृशाः ।
मूल्यताम्बूलयोस्त्वोत्त्वमूकारस्येष्यते बुधैः ।

मोल्लं मूल्यं । अधोमनयामिति यलोपः । ततः

शेषस्य लस्य द्वित्वम् । तंबोलं ताम्बूलम् । मस्यानुस्वारे अदातो यथादिषु वेति आकारस्य अकारः ॥ २५ ॥

सुबोधिनी ।

एषु ऊकारस्य उकारः स्यात् ॥

मधूकमूर्खकूष्माण्डशूद्रोर्द्धपूर्त्तमूर्त्तयः ।
भूर्जशून्योर्मिचूर्णोर्णा मधूकादय ईदशाः ॥

महुओ । मुक्खो ॥ कुम्हण्डं । सुद्दो ॥ उद्धं ॥ पुत्तो मुत्ती भुज्जं सुण्णं उम्मओ । चुण्णं । उण्णा । 'मूल्यताम्बूलयोस्त्वोत्वमूकारस्येष्यतेबुधैः' । मोल्लं तंबोल्लं ॥२५॥

# अद् दुकूले वा लस्य द्वित्वम् ॥ २६ ॥

सञ्जीवनी ।

दुकूलशब्दे ऊकारस्य अकारो लस्य द्वित्वं च युगपद् विकल्पेन भवति । दुअल्लं । पक्षे कगचादिना कलोपे दुऊलमिति ॥ २६ ॥

सुबोधिनी ।

दुकूलशब्दे ऊकारस्य अकारो लस्य च द्वित्वं युगपद्वा भवति ॥ दुअल्लं दुऊलं ॥ २६ ॥

## एन्नूपुरे ॥ २७ ॥

सञ्जीवनी ।

नूपुरशब्दे ऊकारस्य एत्वं स्यात् । णेउरं नूपुरम् । नो णः इति नस्य णः । कगचादिना पकारस्य लोपः । ॥ २७ ॥

सुबोधिनी ।

ऊकारस्य एत्वं स्यात् । णेउरं ॥ २७ ॥

## ओत उद्वा प्रकोष्ठे कस्य वः ॥ २८ ॥

सञ्जीवनी ।

प्रकोष्ठशब्दे ओकारस्य उत्वं ककारस्य वकारश्च युगपद्वा भवति । पवुट्ठो पओट्ठो प्रकोष्ठः । सर्वत्र लवरामिति रेफलोपः । ष्टस्य ठ इति ठः । तस्य द्वित्वे वर्गे युजः पूर्व इति टः । पक्षे कगचादिना कलोपः ॥ २८ ॥

सुबोधिनी ।

ओकारस्य उत्वं ककारस्य वकारश्च युगपद्वा भवेत् । पवुट्ठो पओट्ठो ॥ २८ ॥

## ऋतोऽत् ॥ २९ ॥

सञ्जीवनी ।

ऋकारस्य अत्वं स्यात् । तण्हा तृष्णा । ह्रस्नष्णक्ष्णश्नां ण्हः इति ण्हः ॥ २९ ॥

सुबोधिनी ।

ऋकारस्य अत्वं स्यात् । तण्हा । तृष्णा ॥ २९ ॥

## इदृष्यादिषु वा ॥ ३० ॥

सञ्जीवनी ।

ऋष्यादिषु शब्देषु ऋकारस्य इत्वं स्याद्वा । इसी ऋषिः । शषोः स इति षस्य सः । सुभिस्सुप्सु दीर्घ इति इकारस्य दीर्घत्वम् । ततः अन्त्यस्य हल इति सुलोपः । व्यवस्थितविकल्पोऽयं तेन इत्वाभावपक्षेऽपि ऋषिशब्दे इत्वमेव । अन्यत्र सर्वत्र अत्वम् । मसिणं मसृणम् पक्षे मसणं । ऋतोऽदिति अत्वम् । एवं धिट्ठो धट्ठो धृष्टः । ष्टस्य ठः इति ठः तस्य द्वित्वे वर्गे युजः पूर्व इति टः । विसहो वसहो पिहुलं पहुलं वृषभपृथुलयोः । खघथादिना थभयोर्हत्वम् । दिढो दढो दृढः । मिओ मओ मृगः । गिट्ठी गट्ठी गृष्टिः । पूर्ववत् ठत्वं द्वित्वं च किअं कअं कृतम् । कगचादिना तलोपः । गिद्धो गद्धो गृध्रः । सर्वत्र लवरामिति रेफलोपः । शेषस्य धस्य द्वित्वे वर्गे युजः पूर्व इति दः ।

ऋषिर्मसृणधृष्टौ च वृषभः पृथुलो दृढः ।
मृगो गृष्टिः कृतं गृध्र ऋष्याद्या एवमादयः ॥
भृङ्गभृङ्गारशृङ्गाराः कृपाणः कृपणः कृपा ।
शृगालहृदये वृष्टिदृष्टी इत्येषु नित्यमित् ॥

भिंगो भृङ्गः । नङोर्हलीति ङस्य बिन्दुः । तस्य कपि तद्वर्ग्यान्त इति वा ङत्वम् । भिङ्गारो भृङ्गारः । सिङ्गारो शृङ्गारः । किवाणो किवणो कृपाणकृपणयोः । किवा कृपा । पो व इति वः । सिआलो शृगालः । हिअअं हृदयम् । कगचादिना दयोर्लोपः । विट्ठी दिट्ठी वृष्टिदृष्ट्योः । ष्टस्य ठः । तस्य द्वित्वे वर्गे युजः पूर्व इति टः ॥ ३० ॥

सुबोधिनी ।

एषु ऋत इत्वं स्याद्वा ॥
ऋषिर्मसृणधृष्टौ च वृषभः पृथुलो दृढः ॥
मृगो गृष्टिःकृतो गृद्ध ऋष्याद्या एवमादयः ।

इसी मसिणं धिट्ठो विसहो । पिहुलं । दिढो मिओ गिट्ठी किअं गिद्धो । इत्वाभावपक्षे ऋषिशब्दे रित्वं अन्यत्र अत्वमेव । व्यवस्थितविकल्पोऽयं तेन

भृङ्गभृङ्गारशृङ्गाराः कृपाणकृपणकृपाः
शृगालहृदयेवृष्टिदृष्टी इत्येषु नित्यमिः ।

भिंगो भिंगालो सिंगालो किवाणो किवणो किवा सिआलो हिअअं विट्ठि दिट्ठी ॥ ३० ॥

# उदृत्वादिषु ॥ ३१ ॥

सञ्जीवनी ।

ऋतुशब्दसदृशाः ऋत्वादयः । तेषु ऋत्वादिषु शब्देषु ऋकारस्य उकारादेशः स्यात् । उदू ऋतुः । ऋत्वादिषु तो द इति दः । सुभिस्सुप्सु दीर्घ इति दीर्घः । पउत्ती प्रवृत्तिः । सर्वत्र लवरामिति रेफलोपः । पूर्ववदन्यत । वुत्तन्तो वृत्तान्तः । अदातो यथादिषु वेत्यत्वम् । मुणालं मृणालम् । पुहवी पृथिवी । अत् पथिहारिद्रापृथिवीष्वितीकारस्य अत्वम् । खघथादिना थस्य हः । मुओ मृतः । पाउसो प्रावृट् । दिक्प्रावृषोः स इति सः । नसन्तप्रावृट्शरदः पुंसीति पुंस्त्वम् । अत ओत् सोरित्योत्त्वम् । परहुओ परभृतः । भाउओ जामाउओ भ्रातृजामातृशब्दयोः । स्वार्थे को वेति कप्रत्ययः ॥ ३१ ॥

ऋतुप्रवृत्तिवृत्तान्तमृणालपृथिवीमृताः ।
प्रावृट् परभृतो भ्राता जामातर्त्वादयः स्मृताः ॥

सुबोधिनी ।

ऋत उत्वं स्यात् ।

ऋतुप्रवृत्तिवृत्तान्तमृणालपृथिवीमृताः ।

प्रावृट्परभृतभ्रातृजामातर्वादयः स्मृताः ।

उदू पउत्ती वुत्तंतो मुणालं पुहवी मुओ पाउसो परहुओ भाउओ जमाउओ ॥ ३१ ॥

# युक्तस्यापि रिः ॥ ३२ ॥

सञ्जीवनी ।

युक्तस्यापि वर्णान्तरेण संयुक्तस्य ऋकारस्य रिरित्ययमादेशो भवति । अपिः समुच्चये । जारिसो यादृशः । आदेर्यो ज इति जः । तारिसो तादृशः । एरिसो केरिसो ईदृशकीदृशयोः । एन्नीडापीडकीदृशेदृशेष्वेति ईकारस्य एत्वम् । सर्वत्र शषोः स इति शस्य सः ॥ ३२ ॥

सुबोधिनी ।

अयुक्तस्य रिः ॥ ३२ क ॥

वर्णान्तरेणासंयुक्तस्य ऋतो रिकारः स्यात् । रिणं ऋणम् ।

युक्तस्याऽपि मध्ये ॥ ३२ ख ॥

सुसंस्कृताद्यवर्णमध्यस्थितस्य ऋतो युक्तस्यापि रिकारादेशः स्यात् । यारिसो तारिसो । यादृशः । तादृशः ॥ ३२ ॥

५

# वृक्षे वेन रुर्वा ॥३३ ॥

सञ्जीवनी ।

वृक्षशब्दे वेन वकारेण सह ऋकारस्य रुः स्याद्वा । रुक्खो वृक्षः । ष्कस्कक्षां खः इति क्षस्य खः । तस्य द्वित्वे वर्गे युजः पूर्व इति कः । पक्षे वच्छो वृच्छः । क्ष्मावृक्षक्षणेषु छः छित्वं च पूर्ववत् ।

अत्वमित्वं तथा चोत्वं रित्वं रुत्वमृतो ऽत्र यत् ।
एषां लक्ष्यवशात् कार्यो निश्चयो न तु सूत्रतः ॥३३॥

सुबोधिनी ।

अत्र वेन वकारेण सह ऋतो रुत्वं वा स्यात् । रुक्खो वृक्षः ।
अत्वमित्वं तथाचोत्त्वं रित्वं रुत्वमृतोऽत्र यत् ।
एषां लक्ष्यवशात्कार्यो निश्चयो न तु सूत्रतः ।
ऋत इति निवृत्तम् ॥ ३३ ॥

# ऌत इलिः ॥ ३४ ॥

सञ्जीवनी ।

ऌतः ऌकारस्य इलिरादेशः स्यात् । किलित्तं क्लृप्तम् । वेति वर्तते । सा च व्यवस्थितविभाषा तेनेह न भवति । लिआलो ऌकारः । ऌकारऋकारयोः सावर्ण्यात्

अयुक्तस्यापि लृकारस्य रिः। तस्य हरिद्रादीनां रो लः इति लत्वम् ॥ ३४ ॥

सुबोधिनी।

लृकारस्य इलिरादेशः स्यात्। किलित्तं क्लृप्तम्। वेत्यनुवर्त्तते। स च व्यवस्थितविकल्पार्थः। तेनेह न भवति। लिआरो लृकारः ॥ ३४ ॥

# एत इद्वा वेदनादेवरयोः ॥३५॥

सञ्जीवनी।

एतयोः शब्दयोः एत एकारस्य इकारादेशो भवति वा। तकारोऽसन्देहार्थः। विअणा वेअणा वेदना। कगचादिना दलोपः। नो ण इति णः। दिअरो देअरो देवरः। अत ओत् सोरित्योत्वम्। पूर्ववदन्यत्। 'एकारस्य भवेदित्वं केसरेऽपि विभाषया'। किसरो केसरो केशरः ॥ ३५ ॥

सुबोधिनी।

एतयोरेकारस्य इत्वं स्यात्। विअणा वेअणा। दिअरो देअरो ॥ ३५ ॥

# ऐत एत् ॥ ३६ ॥

सञ्जीवनी ।

ऐत ऐकारस्य स्थाने एत्वं भवति । सेलो शैलः । शषोः स इति शस्य सः । केलासो कैलाशः । वेसअणो वैश्रवणः । सर्वत्र लवरामिति रलोपः । सेण्णं सैन्यम् । अधो मनयामिति यलोपः । नो ण इति णः । शेषादेशादिना द्वित्वम् । वेरं बैरम् तेल्लं तैलम् । नीडादिषु इति लस्य द्वित्वम् ॥ ३६ ॥

सुबोधिनी ।

ऐत ऐकारस्य स्थाने एत्वं भवति सेलो शैलः ॥३६॥

## दैत्यादिषु अइत् ॥ ३७ ॥

सञ्जीवनी ।

ऐत इत्यनुवर्तते औत ओदित्यतः प्राक् । दैत्यादिषु शब्देषु ऐकारस्य अइत् स्यात् । पूर्वेण एत्वं प्राप्तम् । दइच्चो दैत्यः । त्यथ्यद्यां चछजा इति त्यस्य चत्वम् । तस्य शेषादेशेत्यादिना द्वित्वम् । कइअवं कैतवम् । कगचादिना तलोपः । वलोपो न भवति प्रायोग्रहणात् । वइसाहो वैशाखः । शषोः स इति शस्य सः । खघथादिना खस्य हः । सइरं स्वैरम् । पूर्वोक्तपरोक्तयोः परोक्तो विधिर्बलवानिति उपरि लोप इत्यादिना

प्राप्तं सलोपं बाधित्वा सर्वत्र लवरामिति वलोपः। कइरवं कैरवम् । भइरवं भैरवम् । वइसंपाअणो वैशम्पायनः। पो व इति वत्वं न भवति तत्र प्रायोग्रहणानुवृत्तेः । वइदेही वैदेही ।

दैत्यकैतववैशाखस्वैरकैरवभैरवाः ।

वैशम्पायनवैदेह्यौ दैत्याद्या एवमादयः ॥

सिंहावलोकनन्यायेन उत्तरत्र वेति वर्तते तेन 'एतो लक्ष्यवशात् स्यातामइदेतौ कचित्तु वा'। सइरं सेरं स्वैरम् । चइत्तो चेत्तो चैत्रः । वइज्जो वेज्जो वैद्यः । त्यथ्यद्यां चछजा इति त्यस्य चत्वम् । भइरवो भेरवो भैरवः । इह न भवति दइच्चो दैत्यः ॥ ३७ ॥

सुबोधनी ।

एषु एकारस्य अइ इत्यादिश्यते ।

दैत्यकैतववैशाखस्वैरकैरवभैरवाः ।

वैशंपायनवैदेह्यौ दैत्याद्या एवमादयः ॥

दइचो कइअवं वइसाहो सइरं कइरवं वइसंपाअणोवइदेही । सिंहावलोकितन्यायादुत्तरसूत्राद्वेति वर्त्तते । तेन 'एतोलक्ष्यवशात्स्यातां अइदेतौ कचित्तुवा' । सइरं सेरं स्वैरम्। चइत्तो चेत्तो चैत्रः। वइज्जो वेज्जो वैद्यः । भइरवो भेरवो भैरवः । इह तु न भवति । दइच्चो । दैत्यः ॥ ३७ ॥

## दैवे वा ॥ ३८ ॥

सञ्जीवनी ।

दैवशब्दे ऐकारस्य अइत् स्यात् वा । दइवं देव्वं दैवम् । एकारादेशपक्षे सेवादिष्विति वस्य द्वित्वम् ॥ ३८ ॥

सुबोधनी ।

अइत्वं वा स्यात् । दइवं पक्षे । एत्वमेव देव्वं ॥ ३८ ॥

## इत् सैन्धवे ॥ ३९ ॥

सञ्जीवनी ।

सैन्धवशब्दे ऐकारस्य इकारादेशः स्यात् । एत्वापवादः । सिंधवं सैन्धवम् ॥ ३९ ॥

सुबोधनी ।

इत्वं स्यात् । एत्वापवादः । सिंधवं ॥ ३९ ॥

## ईत् धैर्ये ॥ ४० ॥

सञ्जीवनी ।

धैर्यशब्दे ऐकारस्य ईत् स्यात् । धीरम् । तूर्यधैर्यादिना रः ॥ ४० ॥

सुबोधनी ।

इत्वं स्यात् । धीरं । ऐत इति निवृत्तम् ॥ ४० ॥

## औत ओत् ॥ ४१ ॥

सञ्जीवनी ।

औत औकारस्य ओकारादेशः स्यात् । तकारोऽसन्देहार्थः । सोहग्गं दोहग्गं सौभाग्यदौर्भाग्ययोः । खघथादिना भस्य हः । अधो मनयामिति यलोपः । शेषादेशादिना गस्य द्वित्वम् । हकारस्य न भवति । न रहोरिति निषेधात् । जोव्वणं यौवनम् । आदेर्यो ज इति यस्य जः । नीडादिष्विति वस्य द्वित्वम् । कोसंबी कौशाम्बी । अदातो यथादिषु वेत्यत्वम् । कोत्थहो कौस्तुभः । स्तस्य थ इति थः । तस्य द्वित्वे वर्गे युजः पूर्व इति तः । सोमित्ती सौमित्रिः । कोमुई कौमुदी ॥ ४१ ॥

सुबोधनी ।

औकारस्य ओत्वं स्यात् । जोव्वणं यौवनम् ॥ ४१ ॥

## पौरादिषु अउत् ॥ ४२ ॥

सञ्जीवनी ।

औत इत्यनुवर्तते उत्सौन्दर्यादिष्विति यावत् । पौर इत्यादिषु शब्देषु आदेरौकारस्य अउत् स्यात् । ओत्वबाधः । पउरो पौरः । पउरिसं पौरुषम् । इत् पुरुषे रोरिति रुकार उकारस्य इत्वम् । मउणं मउली मौनमौलिशब्दयोः । रउरवो रौरवः । कउरवा कौरवाः । जस्प्रत्ययस्य जश्शसोर्लोप इति लोपः । जश्शस्ङस्यांसु दीर्घ इति दीर्घः । गउडा गौडाः । कउसलं कौशलम् । सउहं सौधम् ।

पौरपौरुषमौनानि मौलिरौरवकौरवाः ।
गौडकौशलसौधानि पौराद्या एवमादयः ॥ ४२ ॥

सुबोधनी ।

एषु औतो अउत् इत्यादिश्यते ।

पौरपौरवमौनानि मौलिरौरवकौरवाः ।
गौडकौशलसौधानि पौराद्या एवमादयः ।

पउरं पउरिसं मउणं मउली रउरवो । कउरवो गउडो । कउसलं । सउहं ॥ ४२ ॥

# आच्च गौरवे ॥ ४३ ॥

सञ्जीवनी ।

अउदित्यनुवर्तते । गौरवशब्दे औकारस्य

आकारादेशो भवति अउश्च । गारवम् गउरवं गौरवम् ॥ ४३ ॥

सुबोधिनी ।

औत आत्वं चकारात् अउदित्यपि । गारवं गउरवं ॥ ४३ ॥

# उत् सौन्दर्यादिषु ॥ ४४ ॥

सञ्जीवनी ।

सौन्दर्यसदृशेषु शब्देषु औकारस्य उत्वं स्यात् । सुन्देरं सौन्दर्यम् । शय्यादिषु इत्येत्वम् । तूर्यधैर्यादिना र्यस्य रः । सुण्डो शौण्डः । शषोः स इति शस्य सः । पुलोमी पौलोमी । उववि‍ट्ठअं औपविष्टकम् । पो व इति वः । ष्टस्य ठ इति ठः । तस्य द्वित्वे वर्गे युजः पूर्व इति टः । कगचादिना कलोपः । एवं मुट्ठिओ मौष्टिकम् । दुआरिओ दौवारिकः ।

सौन्दर्यशौण्डौ पौलोमी औपविष्टकमौष्टिकौ ।
दौवारिकस्तथेत्याद्याः सौन्दर्याद्याः प्रकीर्तिताः ॥४४॥

इति श्री वसन्तराजविरचितायां प्राकृत-
सञ्जीविन्यां प्रथमोऽज्विधिपरिच्छेदः ।

सुबोधिनी ।

औत उत्वं स्यात् ।

सौंदर्यशौण्डौ पौलोमी औपरिष्टकमौष्टिकौ ।

दौवारिकश्चैवमाद्याः सौन्दर्याद्याः प्रकीर्तिताः ।

सुंदेरं सुंडो पुलोमी उपरिट्ठिअं मुट्ठिओ दुआरिओ ॥४४॥

वृत्तौ प्राकृतसूत्राणां सदानन्दस्य निर्मितौ ।

परिच्छेदः सुबोधिन्यामज्विधिः प्रथमो गतः ॥



# द्वितीयः परिच्छेदः ।

## अथायुक्तविधिरुच्यते ।

## अयुक्तस्यानादौ ॥ १ ॥

सञ्जीवनी ।

अधिकारोऽयम् । यदित ऊर्ध्वमनुक्रमिष्याम-स्तदयुक्तस्यासंयोगवतः अनादौ मध्ये स्थितस्य हलो भवतीति वेदितव्यम् । अयुक्तस्येति शषोः स इत्यतः प्रागयमधिकारः। अनादावित्यस्य तु आदेर्यो ज इत्यतः प्राक् ॥ १ ॥

सुबोधिनी ।

अतः परं यत्कार्यं तदयुक्तस्य हलन्तरासंयुक्तस्या-ऽनादौ मध्ये वर्णयोः स्थितस्य वेदितव्यम् । अधिकार-सूत्रमिदम् ॥ १ ॥

# कगचजतदपयवां प्रायो लोपः ॥२॥

सञ्जीवनी ।

कगचादीनां व्यञ्जनमात्रं प्रत्येकं निर्दिश्यते । अकारस्त्वेषामुच्चारणार्थः । ततो द्वन्द्वः । एषां कादीनां नवानामयुक्तानामसंयोगवतां अनादौ मध्ये स्थितानां प्रायो बाहुल्येन लोपः । कस्य-बउलो वराई बकुलवराकयोः । गस्य-साअरो णअरं सागरनगरयोः । चस्य-रअणा सुइरं रचनासुचिरयोः । जस्य-सुअणो रअणी सुजनरजन्योः । तस्य-असई सुरअं असतीसुरतयोः । दस्य-मअणं सअणं मदनसदनयोः । पस्य-रूअं भूओ रुपभूपयोः । यस्य-आउहं सरऊ आयुधसरय्वोः । वस्य-कई कविः । सुभिस्सुप्सु दीर्घः । देअरो देवरः । अयुक्तस्येति किं ? कङ्कणो कङ्कणः । गङ्गा गङ्गैव । अञ्चलं अञ्चलमेव चञ्चलो चञ्चल इत्येवमादयः । 'प्रायः शब्दः कगादीनां लोपातिव्याप्तिबाधकः' । अकोवणो अकोपनः । पो वः इति वः । सगअं स्वगतं । सर्वत्र लवरामिति वलोपः । चूचुअं चूचुकं । सदअं सदयमित्यादयः । 'ईषत्स्पृष्टः प्रयोज्यो यः




क्वचिल्लुप्तेषु कादिषु' । कणयं कनकं चणया चणकाः । जश्शसोर्लोप इति जसो लोपः । जश्शसङस्यांसु दीर्घः इति दीर्घः । गयणं गगनं । वयणं वदनं । मयणो मदन इत्यादौ । 'गत्वं मदकले कस्य तथा मरकतेऽपि च' । मयगलो मदकलः । मरगयं मरकतं तदयोर्लोपे कृते ईषत्स्पृष्टयकारः ॥ २ ॥

## सुबोधिनी ।

कादीनां व्यञ्जनमात्राणां लोपविधौ ग्रहणम् अकारस्त्वेषामुच्चारणमात्रार्थम् । यथा तस्माच्छसो नः पुंसीत्यादौ नकारादुत्तरमकारः ।.कादीनामसंयुक्तानामनादौ स्थितानां लोपः स्यात् । वउलो वकुलः साअरो सागरः रअणा रचना रअणी रजनी सुरअं सुरतं मअणो मदनः रूअं रूपं आउहं आयुधं कई कविः । अयुक्तस्येति किम् ? अनादाविति किम् । कंकणो कङ्कणः । गंगा गङ्गेत्यादयः । 'प्रायः शब्दः कगादीनां लोपातिव्यातिबाधकः' । तेन अकोवणो अकोपनः सगअं स्वगतं चूचुअं चूचुकं सदअं सदयमित्यादयः सिध्यन्ति । 'ईषत्स्पष्टः प्रयोज्यो यः क्वचिल्लुप्तेषु कादिषु ।' कणयं कनकं चणया चनकाः । गयणं गगनं वयणं वदनं मयणो मदनः इत्यादौ ॥ २ ॥

# यमुनायां मस्य ॥ ३ ॥

सञ्जीवनी ।

लोप इत्यनुवर्तते । यमुनाशब्दे मस्य लोपो भवति । जउणा । आदेर्यो ज इति जः ॥ ३ ॥

सुबोधिनी ।

मकारस्य लोपः स्यात् । जउणा ॥ ३ ॥

## स्फटिकनिकषचिकुर-सीकरेषु को हः ॥४॥

सञ्जीवनी ।

क इत्यक्षरं षष्ठ्यन्तम् । एषु चतुर्षु शब्देषु कस्य हत्वं स्यात् । पूर्वेण लोपः प्राप्तः । उत्तरसूत्रेषु च आदेशस्याकार उच्चारणार्थः । एवमादिपरिच्छेद-परिसमाप्तेः । फलिहो स्फटिकः । उपरि लोपः इति सलोपः । स्फटिके लः इति टस्य लः । णिहसो निकषः । चिहुरो चिकुरः । सीहरो शीकरः ॥ ४ ॥

सुबोधिनी ।

एषु ककारस्य हकारः स्यात् । फलिहो निहसो चिहुरो सीहरो ॥ ४ ॥

# चन्द्रिकायां मः ॥ ५ ॥

सञ्जीवनी ।

क इत्यनुवर्तते । चन्द्रिकाशब्दे कस्य मत्वं भवति । चंदिमा । द्रे रो वेति रलोपः ॥ ५ ॥

सुबोधिनी ।

ककारस्य मकारः स्यात् । चंदिमा ॥ ५ ॥

# ऋत्वादिषु तो दः ॥ ६ ॥

सञ्जीवनी ।

त इत्यक्षरं षष्ठ्यन्तम् । ऋतुतुल्येषु शब्देषु तकारस्य दकारादेशो भवति । उदू ऋतुः । उदृत्वादिषु इति ऋकारस्य उत्वम् । सुभिस्सुप्सु दीर्घः इति दीर्घः । आआदो आयातः । सुदं श्रुतम् । सर्वत्र लवरामिति रलोपः । शषो सः इति शस्य सः । नपुंसके सोर्बिन्दुरिति बिन्दुः । खादी ख्यातिः । अधो मनयामिति यलोपः । पूर्ववत् दीर्घः । अन्त्यस्य हल इति सलोपः । तदो ततः । संपदं साम्प्रतं अदातो यथादिषु वेत्यत्वम् । सर्वत्र लवरामिति रलोपः । 'बिन्द्वादीदूत्परस्येह द्वित्वं शेषस्य

नेष्यते' इति पस्य द्वित्वं न भवति। णिव्वुदो निर्वृतः। उद्वत्वादिषु ऋकारस्य उत्वम् । रलोपे कृते शेषादेशादिना वस्य द्वित्वम् । नो णः इति णः । पदारिदो प्रतारितः । रदी पीदी रतिप्रीत्योः ।

ऋत्वागतश्रुतिख्यातिततःसाम्प्रतनिर्वृताः ।

प्रतारितरतिप्रीत्य ऋत्वाद्या एवमादयः ॥

अयं दकारादेशः प्रायेण सौरसेनीमागध्योर्द्रष्टव्यः। इह तु कगचादिना तलोपः ॥ ६ ॥

सुबोधिनी ।

एषु तकारस्य दकारः स्यात् ।

ऋत्वागतश्रुतख्याततितःसाम्प्रतनिर्वृताः ।

प्रतारितरतिप्रीत्य ऋत्वाद्या एवमादयः ।

उदू आअदो सुदं खादी तदो संपदः णिव्वुदो पदारिदो रीदि पीदी। अयं दकारादेश प्रायेण सौरसेनीमागध्योर्द्रष्टव्यः । महाराष्ट्र्यां तकारलोप एव ॥६॥

## प्रतिवेतसपताकासु डः ॥ ७ ॥

सञ्जीवनी ।

त इत्यनुवर्तते ऐरावते वेति यावत् । एषु शब्देषु तकारस्य डत्वं स्यात् । पडिहअं प्रतिहतं। पडिवअणं

प्रतिवचनम्। कगचादिना चलोपः। 'प्रतिशब्दे तकारस्य रेफलोपावपि क्वचित्' । परिट्ठिअं प्रतिष्ठितम्। उपरि लोप इत्यादिना षलोपः। पूर्ववदन्यत् । एवं पइण्णा प्रतिज्ञा । म्नज्ञपञ्चाशत्पञ्चदशसु ण इति ज्ञ इत्यस्य णः। तस्य शेषादेशादिना द्वित्वम् । वेडिसो वेतसः। इदीषदित्यादिना इत्वम्। पडाआ पताका।

'तस्य डत्वं हरीतक्यां प्राभृते मृतके तथा'। हरडई हरीतकी। डस्य (?) वशादीकारस्य अत्वम्। पाहुडं प्राभृतम् । सर्वत्र लवरामिति रलोपः । खघथादिना हत्वं भस्य । उदृत्वादिष्वित्युत्वम्। मडओ मृतकः। ऋतोऽदित्यत्वम् ॥ ७ ॥

सुबोधिनी।

एषु डः स्यात् तस्य। पडिवअणं प्रतिवचनम्। वेडिसो। पडाआ। 'प्रतिशब्दे तकारस्य रेफलोपावपि क्वचित्'। परिट्ठिअं प्रतिष्ठितम् परिट्ठानं प्रतिष्ठानम्। पइण्णा प्रतिज्ञा। 'तस्य डत्वं हरीतक्यां प्राभृते मृतके तथा'। हरडई पाहुडं मडओ ॥ ७ ॥

## वसतिभरतयोर्हः ॥ ८ ॥

सञ्जीवनी।

एतयोः शब्दयोस्तकारस्य हत्वं स्यात् । वसही भरहो ॥ ८ ॥

सुबोधनी ।

वसही भरहो ॥ ८ ॥

## गर्भिते णः ॥ ९ ॥

सञ्जीवनी ।

गर्भितशब्दे तकारस्य णकारादेशो भवति। गब्भिणो । सर्वत्र लवरामिति रलोपः । शेषस्य भस्य द्वित्वे वर्गे युजः पूर्वः इति बः ॥ ९ ॥

सुबोधनी ।

तस्य णः स्यात् । गब्भिणो ॥ ९ ॥

## ऐरावते वा ॥ १० ॥

सञ्जीवनी ।

ण इत्यनुवर्तते । ऐरावतशब्दे तकारस्य णकारादेशो भवति वा । एरावणो । पक्षे एरावओ । 'ऐत एत्' इति एत्वम् । पक्षे कगचादिना तलोपः ॥१०॥

सुबोधनी ।

तस्य णो वा स्यात् । एरावणो । एरावओ ॥ १० ॥

## प्रदीप्तकदम्बदोहदेषु दो लः ॥ ११ ॥

सञ्जीवनी ।

द इत्यक्षरं षष्ठ्यन्तम्। एषु दकारस्य लत्वं स्यात्। पलित्तं। इदीतः पानीयादिषु इति इत्वम्। उपरि लोपः इत्यादिना पलोपः। शेषस्य द्वित्वम्। णिजन्तेऽपि इष्यते। पलाविअं प्रदीपितम्। कलम्बो कदम्बः। दोहलो दोहदः। यावत् सान्तवद् विधिरिति द्वितीयस्यापि लत्वं न भवति। अनादावधिकारात्॥११॥

सुबोधिनी ।

एषु दस्य लः स्यात्। पलित्तं णिजंतेऽपीष्यते पलाविअम्। कलंबो दोहलो॥ ११॥

# गद्गदे रः॥ १२॥

सञ्जीवनी ।

द इत्यनुवर्तते अयुक्तस्येति च। गद्गदशब्दे अयुक्तस्य दस्य रेफादेशो भवति। गग्गरं। उपरि लोप इत्यादिना दलोपः। शेषादेशादिना गस्य द्वित्वम्। नपुंसके सोर्बिन्दुरिति बिन्दुः॥ १२॥

सुबोधनी ।

दस्याऽयुक्तस्य रः स्यात्। गग्गरो॥ १२॥

# संख्यायाश्च॥ १३॥

सञ्जीवनी ।

द इति वर्तते । र इति च । अयुक्तस्यानादाविति च । संख्यावाचिनि शब्दे अयुक्तस्यानादौ स्थितस्य दस्य रेफादेशः स्यात् । एआरह एकादश । कगचादिना कलोपः । दशादिषु हः इति शस्य हः । अन्त्यस्य हलः इति नलोपः । बारह तेरह द्वादश त्रयोदश । 'लोपः साचो यकारस्य क्वचिन्नित्यं क्वचिन्न वा' इति यलोपः । सन्धावचामित्यादिना अकारविसर्गयोरेत्वम् । पण्णरह पञ्चदश । ञ्चज्ञादिना ञ्चस्य णः । सत्तरह सप्तदश । उपरि लोप इत्यादिना पलोपः । अट्ठारह अष्टादश । ष्टस्य ठः इति ठत्वम् । ष्णान्तां संख्यां विना भवेदिति जश्शसूङस्यांसु दीर्घः इति प्राप्तस्य दीर्घस्याभावः । अयुक्तस्येति किम् ? चउद्दह चतुर्दश । अनादाविति किम् ? दह दश ॥ १३ ॥

सुबोधनी ।

संख्याशब्दे अयुक्तस्यानादौ स्थितस्य दस्य रः स्यात् । एआरह एकादश । अयुक्तस्येति किम् ? चउद्दह चतुर्दश ॥१३॥

## पो वः ॥ १४ ॥

## सञ्जीवनी ।

प इत्यक्षरं षष्ठ्यन्तम् । अयुक्तस्यानादौ स्थितस्य पकारस्य वकारादेशो भवति । कवालो उल्लावो कपालोल्लापयोः । कवोलो उवमा कपोलोपमयोः । अयुक्तस्येति किम् ? विप्पो सप्पुरिसो । विप्रसत्पुरुषयोः । ननु रेफतकारयोर्लोपे कृते यावद् द्वित्वं न प्रवर्त्तते तावत् पस्य वत्वं कथं न स्यादित्युच्यते । कृताऽकृतप्रसङ्गित्वात् द्वित्वस्यैव प्रवृत्तेः । अनादाविति किम् ? पई पंडिओ पतिपण्डितयोः । पलोपं प्रति कगचादिसूत्रस्याविषयविभागो लक्ष्यवशात् । 'सुभगाया भवत्यत्र दुर्भगायाश्च गस्य वः' । सूहवा सुभगा दूहवा दुर्भगा । 'ईदूताविदुतोः स्थाने स्यातां लक्ष्यानुरोधतः' इति ऊत्वम् । खघथादिना भस्य हः । दूहवेत्यत्र ऊदुत इत्यादिना ऊत्वम् ॥ १४ ॥

## सुबोधिनी ।

अयुक्तस्यानादिस्थितस्य पस्य वः स्यात् । कवालो कपालः । अनादाविति किम् ? पई पतिः अयुक्तस्येति किम् ? विप्पो विप्रः । ननु रेफलोपे कृते यावद् द्वित्वं न भवति तावदेव वत्वं कथं न स्यादित्युच्यते कृताकृतप्रसङ्गित्वाद्द्वित्वस्यैव प्रवृत्तेः ।

पस्य लोपस्तथा वत्वं ज्ञेये लक्ष्याऽनुसारतः
सुभगाया भवत्सत्र दुर्भगायाश्च गस्य वः ॥ १४ ॥

# आपीडे मः॥ १५ ॥

सञ्जीवनी ।

प इत्यनुवर्तते । आपीडशब्दे पस्य मत्वं स्यात् । वत्वं प्राप्तम् । आमेलो आपीडः । एन्नीडापीडेत्यादिना ईकारस्य एत्वम् । । डस्य चेति डस्य लः ॥ १५ ॥

सुबोधिनी ।

अत्र मः स्यात् । आमेलो ॥ १५ ॥

# उत्तरीयानीययोर्य्यो ज्जो वा॥ १६॥

सञ्जीवनी ।

य इत्यक्षरं षष्ठ्यन्तम् । उत्तरीयशब्दे अनीयप्रत्यये च यकारस्य द्वित्वापन्नो ज्ज इत्यादेशो भवति वा । उत्तरिज्जं उत्तरीअं उत्तरीयम् । यत्र पक्षे ज्ज इत्यादेशः तत्र इदीतः पानीयादिषु इति इत्वम् । रमणिज्जं रमणीअं रमणीयम् । करणिज्जं करणीअं करणीयम् । ननु शेषादेशयोर्द्वित्वमनादाविति द्वित्वे सिद्धे किमर्थो द्विजकारक आदेशः ? असदेतत् तत्र युक्तस्येत्यधिकारात् युक्त-

वर्णादेशानां तत्र विधिः । अत्र तु युक्तानां वर्णाना-मादेश इति कथमेषां द्वित्वं स्यात् ॥ १६ ॥

सुबोधनी ।

उत्तरीयशब्दस्यानीयस्य च सम्बन्धी यो यकारस्तस्य ज्जो इत्यादिश्यते । उत्तरिज्जं रमणिज्जं उत्तरीअं रमणीअं ॥ १६ ॥

## छायायां हः ॥ १७ ॥

सञ्जीवनी ।

य इत्यनुवर्तते । वेतिच । छायाशब्दे यकारस्य हकारादेशःस्यात् वा । छाही छाहा छाआ छायैव । हत्व-पक्षे एकत्र आदीतौ बहुलमिति ईप्रत्ययः । आतपाभाव इति वक्तव्यम् । तेन कणअछाअं अंगं । पउमछाअं मुहं इत्यादौ न भवति ॥ १७ ॥

सुबोधनी ।

अत्र यस्य हः स्याद् वा । छाही छाहा छाआ । आतपा-ऽभाव इति वक्तव्यम् । तेन कणअछाअमित्यादौ कांतिवाचित्वान् न भवति ॥ १७ ॥

## टो डः ॥ १८ ॥

सञ्जीवनी ।

ट इत्यक्षरं षष्ठ्यन्तम्। अयुक्तस्य अनादौ स्थितस्य टस्य डकारादेशो भवति । रडिअं फुडं कुक्कुडो । रटितस्फुटकुक्कुटेषु। अयुक्तस्येति किम्? भट्टो घण्टा । अनादाविति किम् ? टंकारो टङ्कारः । 'अदातो यथादिषु वा' इत्याकारस्य न अत्वम् ॥ १८ ॥

सुबोधनी ।

अयुक्तस्यानादिस्थितस्य टस्य डः स्यात् । फुडं । अयुक्तस्येति किम् ? घण्टा । अनादाविति किम् ? टंकारो ॥ १८ ॥

# सटाशकटकैटभेषु ढः ॥ १९ ॥

सञ्जीवनी ।

ट इत्यनुवर्तते उत्तरत्र च। एतेषु टस्य ढकारः स्यात्। डत्वस्यापवादः । सढाओ सटाः । 'जसो वा' इति ओत्वम् । सअढं शकटम् । 'शषोः सः' इति शस्य सः । केढवो कैटभः । 'ऐत एत्' इति एत्वम् । 'कैटभे वः इति भस्य वः । 'अत ओत् सोः' इति ओत्वम्॥१९॥

सुबोधनी ।

एषु ढः स्यात् । डत्वापवादः । सढा सअढं केढवो ॥१९॥

# स्फटिके लः ॥ २० ॥

सञ्जीवनी ।

स्फटिकशब्दे टस्य लादेशो भवति । फलिहो स्फटिकः । स्फटिकादिना कस्य हः॥ २० ॥

सुबोधिनी ।

टस्य लः स्यात् । फलिहो ॥ २० ॥

# डस्य च ॥ २१ ॥

सञ्जीवनी ।

ल इत्यनुवर्तते । अयुक्तस्यानादौ स्थितस्य डस्य ल आदेशः स्यात् । तलाओ . णिअलम् तडाग-निगडयोः । कगचादिना गलोपः । सोलह षोडश । 'शषोः सः' इति षस्य सः । 'दशादिषु हः' इति शस्य हः । 'अन्त्यस्य हलः' इति नलोपः । 'जश्शसोर्लोपः' इति जसो लोपः । अयुक्तस्येति किम् ? उड्डीणो मण्डवो उड्डीनमण्डपयोः । अनादा-विति किम् ? डाइणी डक्कारो डाकिनीडकारयोः । व्यवस्थितविभाषया क्वचिद्वा डस्य लादेशः । गुलो गुडो गुडः । दालिमं दाडिमं दाडिममेव । आपीलिअं

आपीडिअं आपीडितमित्यादिषु। क्वचिन्नैव लः। लउडो णिविडो लगुडनिविडयोः। इत्यादिषु ॥ २१ ॥

सुबोधिनी ।

डस्य च लः स्यात् अनादिस्थितस्यायुक्तस्य। तलाओ तडागः। अयुक्तस्येति किम् ? उड्डीणो। अनादाविति किम् ? डाइणी डाकिनी।

'क्वचिद्वा डस्य लादेशः क्वचिद्वा नेष्यते बुधैः'। गुलो गुडो गुडः। दालिमं दाडिमं पीडिअं पीलिअं पीडितं। लउडो लगुडः। निविलो निविडः। इत्यादौ ॥ २१ ॥

# ठो ढः २२ ॥

सञ्जीवनी ।

ठ इत्यक्षरं षष्ठ्यन्तम्। अयुक्तस्यानादौ स्थितस्य ठकारस्य ढकारादेशः स्यात्। पढिअं कढिणो पठितकठिनयोः। लुढिओ कमढो लुठितकमठयोः। अयुक्तस्येति किम् ? कण्ठो णिट्ठो। अनादाविति किम् ? ठक्कुरो ठआरो ॥ २२ ॥

सुबोधिनी ।

अयुक्तस्याऽनादौ स्थितस्य ठस्य ढः स्यात्। कढिणो कठिनः अयुक्तस्येति किम् ? कण्ठो। अनादाविति किम् ? ठक्कुरो ॥२२॥

# अंकोठे ल्लः ॥ २३ ॥

सञ्जीवनी ।

अंकोठशब्दे ठस्य द्वित्वमापन्नो ल्ल आदेशः स्यात् । अंकोल्लो ॥ २३ ॥

सुबोधिनी ।

अत्र ठस्य ल्लः स्यात् । अंकोल्लो ॥ २३ ॥

# खघथधफभां हः ॥ २४ ॥

सञ्जीवनी ।

एषां खादीनां अयुक्तानामनादौ स्थितानां हादेशः स्यात् । खस्य तावत्–मुहला मेहला मुखरामेखलयोः । घस्य–अमोहो मेहो अमोघमेघयोः । थस्य–पहिओ महिओ पथिकमथिकयोः । धस्य–अहरो बहिरो अधरबधिरयोः । फस्य–सुहला सेहालिआ सुफलासेफालिकयोः । भस्य–वल्लहो करहो वल्लभ-करभयोः । अयुक्तस्येति किम् ? सङ्खो णिग्घोसो पत्थरो बन्धणो णिप्फलो णिब्भरो । अनादाविति किम् ? खलो घणो थिरो धीरो फणा भीसणो ।

'न हत्वं खघथादीनां परेषां बिन्दुतो भवेत्' ।

संखो लंघणं मंथरा बंधुरो किंफलो कुंभो ।
क्वचित् तद्वर्गान्तः इति तद्वर्गादन्यत्रायं निषेधः । तद्वर्गान्ते तु अयुक्तस्येति तत्राधिकारात् हत्वाभावः । 'प्रायः शब्दानुवृत्त्या पि हत्वाभावः क्वचिद् भवेत्' । अखंडो णिग्घणो थिरो अधमो बहुफलो अभओ इत्यादयः । 'ककुदे तु दकारस्य हकारादेश इष्यते' । कउहं ॥ २४ ॥

सुबोधिनी ।

एषामनुक्तानामनादिस्थितानां हः स्यात् । मेहला मेखला । मेहो मेघः पहिओ पथिकः अहरो अधरः सेहालिआ शेफालिका वल्लहो वल्लभः । अयुक्तस्येति किम् ? सङ्खो णिग्घोसो इत्यादि । अनादौ किम् ? खलो घणो इत्यादि ।

'न हत्वं खघथादीनां परेषां बिंदुतो भवेत्'। संखो लंघनमित्यादौ।

'प्रायः शब्दानुवृत्त्याऽपि हत्वाऽभावः क्वचिद्भवेत्' । अखण्डो णवघणो अधमो बहुफलो अभओ 'ककुदे तु दकारस्य हकारः परिदृश्यते' कउहं ॥ २४ ॥

## प्रथमशिथिलनिषधेषु ढः ॥ २५ ॥

सञ्जीवनी ।

एषां थकारस्य धस्य च ढादेशः स्यात पढमो ।

प्रथमः । सिढिलो निसढो शिथिलनिषधयोः 'शषोः सः' इति सः ॥ २५ ॥

सुबोधिनी ।

एषु थधयोर्ढः स्यात् । पढमो सिढिलो निसढो ॥ २५ ॥

## कैटभे वः ॥ २६ ॥

सञ्जीवनी ।

कैटभशब्दे भस्य वादेशः स्यात् । हत्वस्य बाधकः । केढवो सटाशकटादिना टस्य ढः । 'ऐत एत्' इति एत्वम् ॥ २६ ॥

सुबोधिनी ।

अत्र भस्य वः स्यात् । केढवो ॥ २६ ॥

## हरिद्रादीनां रो लः ॥ २७ ॥

सञ्जीवनी ।

र इत्यक्षरं षष्ठ्यन्तम् । हरिद्रासदृशेषु शब्देषु रेफस्य लादेशः स्यात् । हलद्दी हरिद्रा । अत्पथि-हरिद्रापृथिवीष्विति इकारस्य अत्वम् । द्रे रो वा इति रलोपः । शेषादिना दस्य द्वित्वम् । अन्त्यस्य हलः

इति सुलोपः । मुहलो मुखरः । खघथादिना खस्य हः । इंगालो अङ्गारः । इदीषदित्यादिना अकारस्य इत्वम् । सोमालो सुकुमारः । उत ओत तुण्डरूपेषु इति अतः ओत्वम् । कगचादिना कलोपः । सन्धावचामित्यादिना उलोपः । जुहिठ्ठिलो युधिष्ठिरः । आदेर्यो जः इति जः । खघथादिना धस्य हत्वम् । उपरि लोपः इत्यादिना षलोपः । चिलाओ किरातः । किराते च' इति कस्य चः । कगचादिना तलोपः । फलिहो परिघः । पुरुषपरिघादिना पस्य फः । खघथादिना खस्य हः ।

हरिद्रामुखराङ्गारसुकुमारयुधिष्ठिराः ।
किरातपरिघौ चैवं हरिद्रादीन् प्रकल्पयेत् ॥२७॥

सुबोधिनी ।

एषां रस्य लः स्यात्

हरिद्रामुखरांगारसुकुमारयुधिष्ठिरान् ।
किरातपरिघौ चैव हरिद्रादीन् प्रचक्षते ।

हलिद्दा मुहलो इंगालो सोमालो जुहिट्ठिलो किलाओ फलिहो । अनादावित्यधिकारो निवृत्तः ॥ २७ ॥

# आदेर्यो जः ॥ २८ ॥

सञ्जीवनी ।

य इत्यक्षरं षष्ठ्यन्तम् । आदिभूतस्य यकारस्य जादेशो भवति । जोव्वणं यौवनम् । औत ओत् इति ओत्वम् । 'नीडादिषु' इति वस्य द्वित्वम् । नो णः इति णः । जुअई युवतिः । कगचादिना तवयोर्लोपः । सुभिःसुप्सुदीर्घः इति दीर्घः । जामिनी यामिनी । आदेरिति किम् ? अवअवो अवयवः । अअणं अयनम् । 'भूतपूर्वादिकस्यापि यस्य जादेश इष्यते' । गाढजोव्वणा । बालजुअई बालयुवतिः । सजामिणी सयामिनी । संजमो अजोग्गो संयमायोग्ययोः ॥ २८ ॥

सुबोधिनी ।

पदादिस्थितस्य यस्य जः स्यात् । जुअई युवतिः । आदेरिति किम् णअणं । 'प्रक्षिप्तपूर्वकस्यापि यस्य जादेश इष्यते' । गाढजोव्वणा ॥२८॥

## यष्ट्यां लः ॥ २९ ॥

सञ्जीवनी ।

यष्टिशब्दे अकारस्य लादेशः स्यात् । लट्ठी यष्टिः । ष्टस्य ठः इति ठः । तस्य द्वित्वे वर्गे युजः पूर्वः इति टः । सुभिःसुप्सु दीर्घः इति दीर्घः । अन्त्यस्य हलः

इति सुलोपः। तदन्तोऽपि। खग्गलट्ठी महुलट्ठी खड्गयष्टिमधुयष्ट्योः॥ २९॥

सुबोधिनी।

अत्र यस्य लः स्यात्। लट्ठी खग्गलट्ठी॥ २९॥

# किराते चः॥ ३०॥

सञ्जीवनी।

आदेरित्यनुवर्तते नो णः इत्यतः प्राक्। किरातशब्दस्यादेर्वर्णस्य चादेशः स्यात्। चिलाओ। हरिद्रादित्वात् लः। कगचादिना तलोपः 'म्लेच्छवाच्ये लचादेशौ न हरे कामरूपिणि'। तेन किराओ हरः॥३०॥

सुबोधिनी।

अत्रादिवर्णस्य चः स्यात्। चिलाओ।

'म्लेच्छे वाच्ये लचादेशौ न हरे कामरूपिणि'। हरकिराओ॥ ३०॥

# कुब्जे खः॥ ३१॥

सञ्जीवनी।

कुब्जशब्दे आदेर्वर्णस्य खादेशो भवति। खुज्जो।

सर्वत्र लवरामिति वलोपः । शेषादेशादिना द्वित्वम् । 'खादेशो नम्रदेहत्वे न कुब्जे पुष्पवाचिनि' । फुल्लइ कुब्जं वसंतम्मि ॥ ३१ ॥

सुबोधिनी ।

अत्रादेः खः स्यात् । खुज्जो । 'खादेशो नम्रदेहत्वे न कुब्जे पुष्पवाचिनि । फुल्लइ कुज्जं वसंतम्मि ॥ ३१ ॥

## दोलादण्डदशनेषु डः ॥ ३२ ॥

सञ्जीवनी ।

एषु शब्देषु आदेर्वर्णस्य डकारादेशो भवति । डोला डंडो डसणो । दशनशब्दे जस्शसोर्लोपः । जस्शस्ङस्यांसु दीर्घः इति दीर्घः ॥ ३२ ॥

सुबोधिनी ।

एष्वादेर्डः स्यात् । डोला डंडो डसणो ॥ ३२ ॥

## परुषपरिघपरिखासु फः ॥ ३३ ॥

सञ्जीवनी ।

एषु शब्देषु आदेर्वर्णस्य फः स्यात् । फरुसं परुषम् फलिहो फलिहा परिघपरिखयोः । हरिद्रादीनां रो

लः इति लः । खघथादिना खघयोर्हत्वम् 'पनसेऽपि पकारस्य फकारादेश इष्यते' । फणसो ॥ ३३ ॥

सुबोधिनी ।

एष्वादेः फः स्यात् फरुसं फलिहो फलिहा ।
'पनसेपि पकारस्य फकारादेश इष्यते' । फणसं ॥ ३३ ॥

## बिसिन्यां भः ॥ ३४ ॥

सञ्जीवनी ।

विसिनीशब्दे आदेर्वर्णस्य भः स्यात । भिसिणी । 'प्राधन्याद् . बिसशब्दस्य स्याद् भादेशोऽस्त्रियां तु वा' । भिसं बिसं भिसमेव ॥ ३४ ॥

सुबोधिनी ।

अत्रादेर्भः स्यात् भिसिणी । 'प्राधान्याद्विशब्दस्य स्याद्-भादेशोऽस्त्रियां तु वा' । भिसं विसं ॥ ३४ ॥

## मन्मथे वः ॥ ३५ ॥

सञ्जीवनी ।

मन्मथशब्दे आदेर्वर्णस्य वादेशः स्यात । वम्महो । न्मो मः इति मः । तस्य शेषादेशादिना द्वित्वे खघथादिना थस्य हः ॥ ३५ ॥

सुबोधिनी ।

अन्नादेर्वः स्यात् । वम्महो ॥ ३५ ॥

## लाहललाङ्गललाङ्गूलेषु वा णः ॥ ३६ ॥

सञ्जीवनी ।

एषु शब्देषु आदेर्वर्णस्य णकारादेशो भवति वा । णहलो लाहलो लाहलमेव । णांगलं लांगलं । णांगूलं लांगूलं । अदातो यथादिषु वा इत्यत्वम् । नपुंसके सोर्बिन्दुः इति बिन्दुः ॥ ३६ ॥

सुबोधिनी ।

एष्वादेर्णः स्यात् । णाहलो लाहलो । णंगणं लंगलं णंगूलं लंगूलं ॥ ३६ ॥

## षट्शावसप्तपर्णेषु छः ॥ ३७ ॥

सञ्जीवनी ।

एष्वादेर्वर्णस्य छः स्यात् । छट्ठी षष्ठी । उपरि लोप इत्यादिना षलोपः । शेषस्य द्वित्वे वर्गे युज पूर्वः इति टः । छप्पओ छम्मुहो षट्पदषण्मुखयोः । 'उपर्यपि च

वक्तव्यो लोपो वर्णान्तरस्य च' इति टणयोर्लोपः । शेषादेशादिना द्वित्वम् । छाओ शावः । छत्तवण्णो सप्तपर्णः । उपरि लोपः इत्यादिना सर्वत्र लवरामिति परेफयोर्लोपः । शेषादेशादिना तणयोर्द्वित्वम् । पो वः इति वः ॥ ३७ ॥

सुबोधिनी ।

एष्वादेः छः स्यात् । छट्ठी षष्ठी । छाओ छत्तवण्णो । आदेरिति नाऽनुवर्त्तते ॥ ३७ ॥

# नो णः ॥ ३८ ॥

सञ्जीवनी ।

अयुक्तस्येत्येव । न इत्यक्षरं षष्ठ्यन्तम् । अयुक्तस्य वर्णान्तरेणायुक्तस्य नकारस्य णकारादेशो भवति । घणत्थणी घनस्तनी । स्तस्य थः इति थः । तस्य द्वित्वे वर्गे युजः पूर्वः इति तः । णअणं वअणं । अयुक्तस्येति किम् ? अन्तरा अन्तरा कन्दरा कन्दरा । बन्धुरा बन्धुरा । कथं तर्हि उण्णअं पण्णअं इत्यादौ णत्वम् । वर्णान्तरेणयुक्तमिति विशेषयितव्यम् । तेन यत्रान्येन वर्णेन सह नकारस्य योगः तत्रायुक्तस्येत्यनेन विशेषः । 'आदौ क्वापि नकारस्य णत्वभावोऽपि दृश्यते' । णूणं नूनम् ॥ ३८ ॥

सुबोधिनी ।

अयुक्तस्य नस्य णः स्यात् । घणत्थणी । अयुक्तस्येति किम् ? अन्तरं । अत्राऽयुक्तत्वं स्वभिन्नहलन्तरेण सम्बोध्यं बोद्धव्यम् । तेन उण्णअपओहरेत्यादौ नकारेणैव युक्तस्य स्यादेव । अयुक्तस्येति अधिकारो निवृत्तः ॥ ३८ ॥

# शषोः सः ॥ ३९ ॥

सञ्जीवनी ।

अयुक्तस्येति निवृत्तम् । शषयोः सकारादेशः स्यात् । ससओ सोहिओ शशकशोभितयोः । अस्सो अस्समो अश्वाश्रमयोः । सर्वत्र लवरामिति वरयोर्लोपः । शेषादेशादिना सस्य द्वित्वम् । अदातो यथादिषु वा' इति अत्वम् । महिसो वसहो महिषवृषभयोः । सेसो मेसो शेषमेषयोः ॥ ३९ ॥

सुबोधिनी ।

एतयोः सः स्यात् । सेसोः शेषः । अस्सोः अश्वः ॥ ३९ ॥

# दशादिषु हः ॥ ४० ॥

सञ्जीवनी ।

श इत्यनुवर्तते । दश आदिर्येषां ते दशादयः ।

तेषु दशादिषु अष्टादशपर्यन्तेषु शस्य हादेशः स्यात्। दह दश। एआरह एकादश। कगचादिना कलोपः। बारह। उपरि लोप इत्यादिना दलोपः। तेरह। 'लोपः साचो यकारस्य क्वचिन्नित्यः क्वचिन्न वा' इति साचो यस्य लोपः। सन्ध्यावचामित्यादिना अकारविसर्गयोरेत्वम्। चउद्दह। कगचादिना सर्वत्र लवरामिति तरयोर्लोपः। शेषस्य द्वित्वम्। पण्णरह। म्नज्ञादिना ञ्चस्य णः। शेषादेशादिना द्वित्वम्। सोलह। डस्य चेति लः। सत्तरह। उपरि लोप इत्यादिना पलोपः। शेषादेशादिना द्वित्वम्। अट्ठारह। ष्टस्य ठः। पूर्ववत् द्वित्वम्। सर्वत्र अनेन सस्य हः। संख्यायां चेति दस्य रः। अन्त्यस्य हल इति नलोपः। जश्शसोर्लोपः। 'जसि दीर्घः शसि त्वेत्वं ष्णान्तां संख्यां विना भवेत्' इति जश्शस्ङस्यांसु दीर्घः इति प्राप्तस्य दीर्घस्याभावः 'संख्यावाची दशेत्यत्र व्याख्यानादवगम्यते'। तेनेह न भवति। दसाओ दशाः। जसो वा इति जस ओत्वम्। अदसं वीरम्। अविद्यमाना दशा यस्य तं अदशम्। इह कस्मान्न भवति दसमी अवत्था दससु दिसासु ? उच्यते–उत्तरसूत्रात् सिंहावलोकितन्यायेन वेत्यनुवर्तनेन क्वापि न भवति। 'पाषाणेऽपि षकारस्य

हत्वं निर्दिश्यते बुधैः' । पाहाणो । अस्य कथं समावेशः ? तस्य शषोर्मध्यात् शकार एव स्थितत्वेऽप्यनुदीर्यमाणोऽनुवर्तते न षकारः । ब्रूमः—दशादिषु षकारस्य सम्भवात् । तर्हि एवं स्थिते षोडश अष्टादश शब्दयोर्षकारस्य हत्वं स्यात्, सत्यं किञ्च मण्डूकप्लुतिन्यायेन अनादावित्यत्र सम्बध्यते तेन षोडशशब्दे न भवति । अष्टादशशब्दे प्रतिपदोक्तत्वेन ष्टस्य ठ इति ठकारेण प्रवृत्ते षस्य हत्वाभावः ॥ ४० ॥

## सुबोधिनी ।

दशादिष्वष्टादशान्तेषु शस्य हः स्यात् । दह इत्यादि । उत्तरसूत्रात्सिंहावलोकितन्यायेन वेत्यनुवर्त्तते तेन दशसु दिशासु इत्यादौ न हत्वम् । 'पाषाणेपि षकारस्य हत्वं निर्दिश्यते बुधैः' । पाहाणो । अत्र शषोरेकसमासस्थयो र्मध्यात् शकारएव कथमनुवर्त्तते ? न च दशादिषु षकाराभावात्तदनुवृत्तिरिति युक्तं षोडशाष्टादशशब्दयोः षकारसत्त्वात् । यद्यप्येवं तथापि मण्डूकप्लुतिन्यायेनानादावित्यत्रापि संबुध्यते तेन षोडशशब्दे न भवति । अष्टादशशब्देऽपि ठकारविधेर्बलवत्त्वाद्धत्वाऽभावः ॥ ४० ॥

# संज्ञायां वा ॥ ४१ ॥

सञ्जीवनी।

दशेत्यनुवर्तते। ह इति च। संज्ञायां नाम्नि दशन्शब्दे शस्य हत्वं वा स्यात्। दहमुहो दसमुहो। दहरहो दसरहो दशमुखदशरथयोः। खघथादिना खथयोर्हः। अत्र एकादशादयो नानुवर्तन्ते। तेषां संज्ञायामसंभवात्॥ ४१॥

सुबोधिनी।

नाम्नि दशशब्दे शस्य हः स्याद्वा। दहमुहो दसमुहो दशमुखः॥ ४१॥

## दिवसे सस्य॥ ४२॥

सञ्जीवनी।

ह इत्यनुवर्तते वेति च। दिवसे सकारादेशः स्याद्वा। दिअहो दिअसो॥ ४२॥

सुबोधिनी।

दिवसे सस्य हः स्याद्वा। दिअहो दिअसो॥ ४२॥

## स्नुषायां ण्हः॥ ४३॥

सञ्जीवनी ।

मण्डूकप्लुतिन्यायेन षस्येत्यनुवर्तते नान्यत् । स्नुषाशब्दे षस्य ण्हादेशः स्यात् । सोण्हा । उत ओत् तुण्डरूपेषु इति ओत्वम् । अधो मनयामिति नलोपः ॥ ४३ ॥

इति प्राकृतसञ्जीविन्यां अयुक्तविधिः
द्वितीयः परिच्छेदः ।

सुबोधिनी ।

मण्डूकप्लुतिन्यायेन षस्येत्यनुवर्त्तते नान्यत् स्नुषाशब्दे षस्य ण्ह इति आदिश्यते । सोण्हा ।

वृत्तौ प्राकृतसूत्राणां श्रीसदानन्दनिर्मित्तौ ।
परिच्छेदः सुबोधिन्यां द्वितीयोऽगादयं विधिः ॥ २ ॥

# अथ तृतीयः परिच्छेदः

## युक्तविधिरुच्यते

## उपरि लोपः कगडतदपषसशाम् ॥ १ ॥

### सञ्जीवनी ।

कादीनां व्यञ्जनमात्रमत्र निर्दिश्यते । अकारस्तु उच्चारणार्थः । ततो द्वन्द्वः । एवं उत्तरसूत्रयोरपि । एषां कादीनामष्टानां व्यञ्जनमात्राणां वर्णान्तरोपरि स्थितानां लोपो भवति । कस्य-भत्तम् भुत्तं भक्तभुक्तयोः । गस्य-दुद्धं मुद्धं दुग्धमुग्धयोः । डस्य-खग्गो छग्गुणो खड्गषड्गुणयोः । खड्गादिना षस्य छः । तस्य-उप्फुल्लं उप्पलं उत्फुल्लोत्पलयोः । दस्य-मुग्गरो मुग्गलो मुद्गरमुद्गलयोः । पस्य-गुत्तं लुत्तं गुप्तलुप्तयोः । षस्य-कुट्ठं गोट्ठं कुष्ठगोष्ठयोः । सस्य-खलिअं अप्फालिअं स्खलितास्फलितयोः । अदातो यथा-

दिषु वेति अत्वम् । सर्वत्र उपरि लोपे कृते शेषस्य शेषादेशादिना द्वित्वम् । 'उपरिस्थोऽपि वक्तव्यो लोपो वर्णान्तरस्य च' । छप्पओ छम्मुहो षट्पदषण्मुखयोः । टकारणकारयोर्लोपे कृते शेषयोः पमयोर्द्वित्वम् । खड्गादिना सस्य छः । णिच्चलो निश्चलः । पूर्ववत द्वित्वम् । हरिअंदो हरिश्चन्द्रः । अत्रापि सलोपः । कगचादिना चलोपः । द्रे रो वेति रलोपः ॥१॥

सुबोधिनी ।

कादीनां व्यंजनमत्राणां व्यंजनोपरिस्थितानां लोपः स्यात् । भत्ती भक्तिः । मुद्धं मुग्धं । खग्गो खड्गः । उप्पलं उत्पलं । मोग्गरो मुद्गरः । सुत्तं सुप्तं । जुट्ठं जुष्टं । खलिअं स्खलितं । 'उपरि क्वापि वक्तव्यो लोपो वर्णान्तरस्य च' । छप्पओ षट्पदः । छम्मुहो षण्मुखः । निच्चलो निश्चलः । हरिअंदो हरिश्चंद्रः ॥ १ ॥

# अधो मनयाम् ॥ २ ॥

सञ्जीवनी ।

लोप इत्यनुवर्तते श्मश्रुश्मशानयोरिति यावत् । मनयामित्येतेषां वर्गान्तरस्याधः स्थितानां लोपो भवति । मस्य-रस्सओ । जस ओ वा इति जसः स्थाने वा ओत्वम् । मलोपे शषोः सः इति शस्य सः ।

शेषादेशादिना द्वित्वम् । नस्य-लग्गो लग्नः । यस्य-अण्णा सामा रस्सा अन्याश्यामारश्यास्तु । 'रेफस्याधो हकारेऽपि लोपो भवति कुत्रचित्' । दासारो दाशार्हः ॥ २ ॥

सुबोधिनी ।

मनय इत्येतेषां वर्णान्तरस्याधः स्थितानां लोपः स्यात् । रस्सओ रश्मयः । लग्गो लग्नः । सामा श्यामा । 'रेफस्याधो हकारेऽपि लोपो भवति कुत्रचित्' । दासारो दाशार्हः ॥ २ ॥

# सर्वत्र लवराम् ॥ ३ ॥

सञ्जीवनी ।

लवर इत्येतेषां वर्णान्तरस्योपरि अधः स्थितानां लोपो भवति । उपरि तावत्-सेम्मली शाल्मलिः । अदातो यथादिषु वेति अत्वम् । तस्य ए च शय्यादिषु इत्येत्वम् । ललोपे कृते शेषादेशादिना द्वित्वम् सुभिस्सुप्सु दीर्घ इति दीर्घः । न तु प्रथममेव अधो मनयामिति यलोपः कस्मान्न भवतीति उच्यते । सत्यं 'पूर्वोक्तात् परोक्तो विधिर्बलवान्' इति वचनात् । वक्कलं वल्कलम् । लस्याधः-सण्हं श्लक्ष्णम । 'ह्लक्ष्ण-क्ष्णश्नां ण्हः' इति क्ष्णस्य ण्हः । विक्कओ विक्लवः ।

वस्योपरि–लद्धो सद्दो लब्धशब्दयोः। वस्याधः–उज्जलो ईसरो उज्ज्वलेश्वरयोः। रस्योपरि–धम्माधम्मो धर्म्माधर्म्मयोः। रस्याधः–मित्तं कलत्तं मित्रकलत्रयोः ॥ ३ ॥

सुबोधिनी।

लवर इत्येतेषां वर्णान्तरस्याध उपरि वा स्थितानां सर्वत्र लोपो भवति। सण्हं क्ष्णम्। सेम्मली शाल्मलिः। अत्र पूर्वापरयोः परो विधिर्बलवानिति लस्यैव लोपो न तु मस्य। ईसरो ईश्वरः। सद्दो शब्दः। मित्तं मित्रम्। धम्मो धर्म्मः ॥ ३ ॥

## द्रे रो वा ॥ ४ ॥

सञ्जीवनी।

र इत्यक्षरं षष्ठ्यन्तम्। द्रकारे स्थितस्य रेफस्य लोपो भवति वा। पूर्वेण नित्यं प्राप्तः। इंदो इन्द्रो चंदो चन्द्रो इन्द्रचन्द्रयोः। रुद्दो रुद्रो समुद्दो समुद्रो रुद्रसमुद्रयोः। अत्र रेफलोपभावपक्षे प्रयोगाः पीडितसंयोगा घटनीयाः। तथा चोक्तम्—

व्यञ्जनस्य हरेफाभ्यां योगे पूर्वो लघुर्मतः।
इति प्राकृतभाषायां संस्कृतादतिरिच्यते ॥ ४ ॥

सुबोधिनी ।

द्रुशब्दे वा रस्य लोपेः स्यात् । रुद्दो रुद्रः । रुद्रः । अत्र

व्यंजनस्य हरेफाभ्यां योगे पूर्वो लघुर्मतः ।

इति प्राकृतभाषायां संस्कृतादतिरिच्यते ॥ ४ ॥

# सर्वज्ञतुल्येषु ञः ॥ ५ ॥

सञ्जीवनी ।

रस्य वेति नानुवर्तते अनयोः अनपेक्षितत्वात् । सर्वज्ञशब्देन तुल्याः सर्वज्ञतुल्याः । तेषु सर्वज्ञतुल्येषु शब्देषु ञकारस्य लोपो भवति । ञ्ज्ञादिना प्राप्तणत्वस्य बाधः । सव्वज्जो सर्वज्ञः । सर्वत्र लवरा-मिति रलोपः । शेषादेशादिना जवयोर्द्वित्वम् । अप्पज्जो आत्मज्ञः । अदातो यथादिषु वेति अत्वम् । 'आत्मनि पः इति त्मस्य पः । पूर्ववदन्यत् । देवज्जो दैवज्ञः । 'दैवे च' इति ऐकारस्य एत्वम् । मणोज्जो विज्जो मनोज्ञविज्ञयोः ।

सर्वज्ञात्मज्ञदैवज्ञा मनोज्ञो विज्ञ ईदृशाः ।
येषां ज्ञस्य जलोपोऽस्ति ते सर्वज्ञसमा मताः ॥५॥

सुबोधिनी ।

सर्वज्ञसमशब्देषु ञस्य लोपः स्यात् ।
सर्वज्ञ । त्मज्ञदैवज्ञा मनोज्ञोविज्ञ ईदृशाः ।

येषां ज्ञस्य ञलोपः स्यात् ते सर्वज्ञसमा मताः ॥
सव्वज्जो अप्पज्जो देवज्जो विज्जो मणोज्जो ॥ ५ ॥

## मध्याह्ने हस्य ॥ ६ ॥

सञ्जीवनी ।

मध्याह्नशब्दे हकारस्य लोपो भवति । ह्नस्नष्णक्ष्णश्नां ण्हः' इति प्राप्तस्य ण्हस्य बाधः । मज्झण्णो । अदातो यथादिषु वेति अत्वम् । 'ध्यह्ययोर्झः' इति झः । शेषादेशादिना झणयोर्द्वित्वम् ॥ ६ ॥

सुबोधिनी ।

अत्र हस्य लोपः स्यात् । मज्झण्णो ॥ ६ ॥

## श्मश्रुश्मशानयोरादेः ॥ ७ ॥

सञ्जीवनी ।

श्मश्रुश्मशानयोरादेर्वर्णस्य लोपो भवति । अधो मनयामिति मलोपः प्राप्तः । मस्सू । सर्वत्र लवरामिति रलोपः । शेषस्य द्वित्वम् । सुभिस्सुप्सु दीर्घ इति दीर्घः । मसाणं । 'शषोः सः' इति सः । नो णः इति णः ॥ ७ ॥

सुबोधिनी ।

अनयोरादेर्वर्णस्य लोपः स्यात् । मस्सू मसाणं । लोप इति निवृत्तम् ॥ ७ ॥

## ह्नह्लह्मेषु नलमां स्थिति-रूर्ध्वम् ॥ ८ ॥

सञ्जीवनी ।

लोप इति निवृत्तम् । एषु संयोगेषु अधः स्थितानां नलमामित्येतेषां वर्णानां हकारस्य स्थितिरूर्ध्वं भवति । संयोगवर्णयोः परिवृत्तिर्भवतीत्यर्थः । सर्वत्र लवराभिति अधो मनयामित्यनयोर्बाधः । ह्नस्य-पुव्वण्हो पूर्वाह्नः । उदूतो मधुकादिषु इत्युत्वम् । अवरण्हो अपराह्नः । ह्लस्य-कल्हारं आल्हादो । कह्लाराह्लादयोः ह्मस्य-जिम्हो वम्हणो जिह्मब्राह्मणयोः ॥ ८ ॥

सुबोधिनी ।

एषु संयोगेषु हस्याधःस्थितानां लादीनां तदुपरि स्थितिः स्यात् । पुव्वण्हो पूर्वाह्नः । कल्हारं कह्लारम् । जिम्हो जिह्मः॥८॥

## युक्तस्य ॥ ९ ॥

सञ्जीवनी ।

अधिकारोऽयम् । अत ऊर्ध्वं यदनुक्रमिष्यामः युक्तस्य सकलस्य तद्भवतीति वेदितव्यम् । पूर्वं युक्तैकदेशस्य विधिरासीत् । आ परिच्छेदसमाप्तेः अयमधिकारः ॥ ९ ॥

सुबोधिनी ।

अधिकारसूत्रमिदम् । अतः परं यत्कार्यं तद्युक्तस्य संपूर्णस्यैव युक्ताक्षरस्य वेदितव्यम् , न तु पूर्ववद्युक्तैकदेशस्य ॥९॥

## ष्टस्य ठः ॥ १० ॥

सञ्जीवनी ।

ष्ट इत्येतस्य ठ आदेशः स्यात् । दिट्ठी दृष्टिः । मुट्ठी मुष्टिः । दिट्ठीत्यत्र इदृष्यादिषु इति ऋकारस्य इत्वम् । सुभिस्सुप्सु दीर्घः इति दीर्घः । अन्त्यस्य हल इति सुलोपः । णट्ठं दट्ठं नष्टदृष्टयोः । सर्वत्र ठादेशस्य द्वित्वे वर्गे युजः पूर्व इति टः । 'इष्टायामप्रियायां तु ठादेशो नैव दृश्यते'। इट्टा मृन्मयविशेषः । अप्रियायामिति किम् ? इट्ठा अभिमता । 'उष्ट्रशब्दे विकल्पेन ष्टस्य ठादेश इष्यते'। उट्ठो उट्टो उष्ट्रः। सर्वत्र लवरामिति रलोपः । ठादेशाभावपक्षे उपरि लोप

इत्यादिना षलोपः ॥ १० ॥

सुबोधिनी ।

ष्ठ इत्यस्य ठकारः स्यात् । दिट्ठी दृष्टिः । 'इष्टायाम-प्रियार्थायां ष्टस्य ठत्वं न दृश्यते' । इट्टा ईंट इति प्रसिद्धा । अप्रियार्थायामिति किम् ? इट्ठा इति प्रेयसीवाचिनि माभून्निषेधः । 'ष्ट इत्यस्य ठकारः स्यादुष्ट्रशब्दे विभाषया' । उट्ठो उट्टो ॥ १० ॥

# अस्थनि ॥ ११ ॥

सञ्जीवनी ।

ठ इत्यनुववर्तते । अस्थिशब्दे युक्तस्य वर्णस्य ठः स्यात् । अट्ठी । ठादेशस्य द्वित्वे वर्गे युजः पूर्वः इति टः । 'एवं लिङ्गविपर्यासो ज्ञेयः शब्दान्तरेष्वपि' इति नपुंसकस्यापि स्त्रीत्वे सति सुभिस्सुप्सु दीर्घ इति दीर्घः । 'अन्यत्रापि क्वचित् ठत्वं स्थकारस्येष्यते बुधैः' । विसंठुलं विसंष्ठुलम् । 'आदेशस्य भवेत् द्वित्वं नानुस्वारपरस्य च' इति ठस्य द्वित्वाभावः । क्वचिद्-ग्रहणादिह न भवति । सुत्थिओ दुत्थिओ सुस्थित-दुःस्थितयोः । थूलं थलं स्थूलस्थलयोः ॥ ११ ॥

सुबोधिनी ।

अत्र युक्तस्य ठः स्यात् । अट्ठी अस्थि । 'अन्यत्रापि

क्वचित् ठत्वं स्थकारस्येष्यते बुधैः' । विसंठुलं विसंष्ठुलम् । विसंपूर्वस्य स्थाधातोरिदं रूपम् । क्वचिदित्यनेन लक्ष्यानुसारितामाहुः ॥ ११ ॥

# स्तस्य थः ॥ १२ ॥

सञ्जीवनी ।

स्त इत्यस्य थः स्यात् । उपरि लोपबाधः । कोत्थुहो कौस्तुभः । औत ओदिति ओत्वम् । खघथादिना भस्य हः । थादेशस्य द्वित्वे वर्गे युजः पूर्व इति तः । थुई थवओ स्तुतिस्तवकयोः ॥ १२ ॥

सुबोधिनी ।

स्त इत्यस्य थकारः स्यात् । कोत्थुहो कौस्तुभः ॥ १२ ॥

# तः स्तंबे ॥ १३ ॥

सञ्जीवनी ।

स्तस्येत्यनुवर्तते । स्तंबशब्दे स्तस्य तादेशः स्यात् । थबाधः । तंबो स्तंबः ॥ १३ ॥

सुबोधिनी ।

अत्र स्तस्य तः स्यात् । तंबो ॥ १३ ॥

# स्तम्भे खः ॥ १४ ॥

सञ्जीवनी ।

स्तम्भशब्दे खादेशः स्यात् । खंभो । 'स्थूणार्थस्य च खः स्तम्भे तस्य बाधोऽन्यवाचके' । उरुत्थंभो । थंभिअं विसं । अग्गित्थंभो ॥ १४ ॥

सुबोधिनी ।

स्तंभशब्दे स्तस्य खः स्यात् । 'स्थूणार्थे स्तस्य खः स्तंभे न त्वन्यस्मिन्कदाचन' । ऊरुत्थंभो ॥ १४ ॥

# स्थाणावहरे ॥ १५ ॥

सञ्जीवनी ।

ख इत्यनुवर्तते । अहरे अमहेश्वरप्रतिपादके स्थाणुशब्दे युक्तस्य वर्णस्य खः स्यात् । खण्णुओ अदातो यथादिषु वा इति अत्वम् । नीडादिषु इति णस्य द्वित्वम् । स्वार्थे को वेति कः । तस्य कगचादिना लोपः । अत ओत् सोः इति ओत्वम् । क्वचिदपि लोपः इति अलोपः । अहरे इति किम् ? अच्चिओ थाणू ॥ १५ ॥

सुबोधिनी ।

अहरे महेश्वरभिन्ने वर्त्तमाने स्थाणुशब्दे युक्तवर्णस्य खः स्यात् । खणुओ । अहर इति किम् ? थाणू ॥ १५ ॥

## क्ष्वेटके च ॥ १६ ॥

सञ्जीवनी ।

ख इत्यनुवर्तते । क्ष्वेटकशब्दे युक्तवर्णस्य खः स्यात् । खेडओ । टो डः इति टस्य डः । कगचादिना कलोपः ॥ १६ ॥

सुबोधिनी ।

अत्र युक्तस्य खः स्यात् । खेडओ ॥ १६ ॥

## र्यशय्याभिमन्युषु जः ॥ १७ ॥

सञ्जीवनी ।

र्यस्य शय्याभिमन्यु इत्येतयोश्च यो युक्तो वर्णः तस्य जः स्यात् । सर्वत्र लवरामधो मनयामि-त्यनयोर्बाधः । कज्जं पज्जंतं कार्यपर्यन्तयोः । अदातो यथादिषु वेति अत्वम् । सेज्जा शय्या । ए च शय्यादिषु इत्येत्वम् । अभिमज्जू अभिमन्युः । 'अभियुक्तस्य निर्देशाज्जत्वं मन्यौ न कवले' । मण्णू ।

अधो मनयामिति यलोपः। सुभिस्सुप्सु दीर्घ इति दीर्घः। 'रलोपोऽपीष्यते र्यस्य क्वापि प्राकृतकोविदैः'। अय्यो अय्यउत्तो आर्यार्यपुत्रयोः। एवं प्रायाश्च शब्दाः शौरसेन्यादिषु भाषासु प्रयुक्ता दृश्यन्ते। क्वचिदिति किम्? शुद्धे प्राकृते न भवति। अज्जो ॥१७॥

सुबोधिनी।

कार्यशय्याभिमन्युषु जः ॥ १७ क ॥

कार्यशब्दे शय्याभिमन्युशब्दयोर्यो युक्तस्तस्य जः स्यात्। कज्जं सेज्जा अहिमज्जू। 'अभियुक्तस्य निर्देशाज्जत्वं मन्यौ न केवले'। मण्णू। 'रलोपोऽपीष्यते क्वापि र्यस्य प्राकृतकोविदैः। अय्यो आर्यः। एवंप्रायाः प्रयोगाः शौरसेन्यादौ दृश्यन्ते अत एवाह क्वापीति। शुद्धप्राकृते तु न भवति। अज्जो ॥१७॥

# तूर्यधैर्यसौन्दर्याश्चर्य-पर्यन्तेषु रः ॥ १८ ॥

सञ्जीवनी।

र्यस्येति अपेक्षते र्तस्य टः इत्यतः प्राक्। एषु पञ्चसु शब्देषु रेफादेशः स्यात्। जादेशस्य बाधः। तूरं तूर्यम्। धीरं धैर्यम्। ईत् धैर्ये इति ऐकारस्य

ईत्वम् । सुन्देरं सौन्दर्यम् । उत्सौन्दर्यादिषु इति औकारस्य उकारः। ए च शय्यादिषु इति एत्वम् । अच्छेरं आश्चर्यम् । अदातो यथादिषु वेति अत्वम् । श्चत्सप्सां छः इति श्चस्य छत्वम् । पेरन्तो पर्यन्तः । पूर्ववदेत्वम् । 'शौटीर्येऽपि र्यशब्दस्य र इत्यादेश इष्यते'। सोंडीरम्।टो डः इति डः। सर्वत्र रेफादेशस्य न द्वित्वम्, न रहोः इति निषेधात् ॥ १८ ॥

सुबोधिनी।

एषु र्यस्य रः स्यात्। तूरं धीरं सुंदेरं अच्छेरं पेरंतो। 'शौंडीर्येऽपि र्यशब्दस्य र इत्यादेश इष्यते'। सोंडीरं ॥ १८ ॥

# सूर्ये वा ॥ १९ ॥

सञ्जीवनी।

र इत्यनुवर्तते । सूर्यशब्दे र्यस्य वा रः स्यात् । सूरो सुज्जो । रेफादेशाभावपक्षे र्यशय्याभिमन्युषु जः इति र्यस्य जः । उदूतो मधुकादिषु इति उत्वम् ॥ १९ ॥

सुबोधिनी।

अत्र र्यस्य रो वा स्यात्। सूरो सुज्जो ॥ १९ ॥

# चौर्यसमेषु रिअः ॥ २० ॥

सञ्जीवनी ।

चौर्यसदृशेषु शब्देषु रिअ आदेशः स्यात् । चोरिअं चौर्यम् । औत ओदिति ओत्वम् । महुरिअं माधुर्यम् । अदातो यथादिषु वेति अत्वम् । खघथादिना घस्य हः । अच्छरिअं आश्चर्यं । अत्रापि पूर्ववदत्वम् । श्चत्सप्सामिति श्चस्य छः । सोरिअं शौर्यम् । औत ओदित्योत्वम् । थेरिअं स्थैर्यम् । ऐत एदित्येत्वम् । उपरि लोप इत्यादिना सलोपः । सर्वत्र नपुंसके सो बिन्दुरिति बिन्दुः । धोरिओ धुर्यः । उत ओत् तुण्डरूपेषु इत्योत्वम् । अत ओत् सोः इति सोरोत्वम् क्वचिदपि लोप इत्यलोपः । अरियो आर्यः । भरिआ भार्या । आआरिओ आचार्यः । कगचादिना चलोपः । ईषत्स्पृष्टप्रयोगः । 'ईषत्स्पृष्टो रिआदेशो यकारोऽकार एव वा' । भरिया भार्या ।

चौर्यमाधुर्यमाश्चर्यशौर्यस्थैर्यसमन्विताः ।
धुर्यार्यभार्याचार्याश्च चौर्यतुल्याः स्युरीदृशाः॥२०॥

सुबोधिनी ।

चौर्यतुल्यशब्देषु र्यस्य रिअ इत्यादिश्यते ।

चौर्य्यं माधुर्य्यमाश्चर्य्यं शौर्य्यस्थैर्य्यसमन्वितम्।
आचार्य्यधुर्य्यभार्य्यार्याः चौर्य्यतुल्याः स्युरीदृशाः।

'ईषत्स्पृष्टो रिआदेशे यकारो ऽकार एव वा'। चोरिअं चोरियं। महुरिअं महुरियं। अच्छरिअं अच्छरियं। सोरिअं सोरियं। थेरिअं थेरियं। आचारिओ आचारियो। धुरिओ धुरियो। भारिआ भारिया। अरिओ अरियो॥ २०॥

# पर्यस्तपर्याणसौकुमार्येषु ल्लः॥२१॥

## सञ्जीवनी।

एषु र्यस्य लादेशः स्यात्। पल्लत्थं। स्तस्य थ इति थः। अस्य द्वित्वे वर्गे युजः पूर्व इति तः। पल्लाणं सोअमल्लं पर्याणसौकुमार्ययोः। औत ओदिति ओत्वम्। कगचादिना कलोपः। अन्मुकुटादिषु इत्युकारस्यात्वम्। अदातो यथादिषु वेत्यत्वम्। पर्यस्तशब्दे निष्ठालादेशो न प्रधानं तेन अन्यत्रापि प्रत्यये र्यस्य लत्वम्। पल्लट्टंति पर्यस्यन्ति। र्यस्य लत्वम्। 'स्यस्तयोरपि वा टत्वं क्रियते क्वापि शाब्दिकैः' इति टः। तस्य द्वित्वम्। सेवादिषु वेति लस्य द्वित्व-विकल्पः। 'पर्यंकेऽपि भवेल्लत्वं पल्यंके तु किमुच्यते'।

पल्लंको। र्यस्य लत्वं द्वित्वं च। पल्यङ्कशब्दे तु अधो मनयामिति यलोपसिद्धत्वात् नापूर्वोऽयं विधिः। 'आर्द्रशब्दे र्द्रकारस्य लादेशो वेष्यते बुधैः'। ओल्लं अल्लं ओद्दं अद्दं। 'ओत्वमादेर्विकल्पेन स्यादार्द्रार्पितशब्दयोः'। ओत्वापक्षे अदातो यथादिषु वेत्यत्वम्। द्रे रो वेति रलोपः। यत्र पक्षे र्द्रस्य लत्वं नास्ति, तत्र सर्वत्र लवरामिति रलोपः। दलयोर्द्वित्वम्। ननूपरि लोप इत्यादिना दलोपे कृते हरिद्रादीनां रो ल इति दलोपावशिष्टस्य रस्य लत्वे शेषत्वात् द्वित्वे कृते प्रयोगाणां सिद्धत्वात् अनर्थोऽयम्, नातः पूर्वोक्तपरिभाषया दलोपं बाधित्वा सर्वत्र लवरामिति रलोपः प्रयुक्तः॥२१॥

सुबोधिनी।

एषु र्यस्य लः। स्यात्। पल्लत्थं पल्लाणं सोअमल्लं। पर्यस्तशब्दे निष्ठा नाद्रियते। तेनान्यत्रापि भवति। पल्लट्टंति पर्यस्यंति। 'पर्यङ्केऽपि भवेल्लत्वं पल्यंके तु किमुच्यते'। पल्लंको। पल्यंकशब्दे सूत्रादेव पल्लंकमिति रूपं सिध्यति इति नायमपूर्वो विधिः। 'आर्द्रशब्दे र्द्रकारस्य लादेशो वेष्यते बुधैः'। ओल्लं अल्लं। ओद्दं अद्दं॥ २१॥

## र्तस्य टः॥ २२॥

## सञ्जीवनी ।

र्त इत्यस्य टादेशो भवति । रलोपबाधाय आदेशः प्रवर्तते । पअट्टइ प्रवर्तते । सर्वत्र लवरामिति रेफलोपः कगचादिना वलोपः । ततिपोरिदेताविति प्रत्ययस्येत्वम् । केअट्टो कैवर्तः । वट्टी वर्तिः । वट्टा वर्त्म । अधो मनयामिति मलोपः । लिङ्गविपर्यासात् स्त्रीत्वम् । तेन स्त्रियां आदीतौ इति आत्वम् । अट्टो णट्टओ । सर्वत्र टादेशस्य द्वित्वम् । कथं तर्हि णच्चणं ? चो व्रजनृत्योरिति चविधानात् । 'स्यस्तयोरपि वा टत्वं क्रियते क्वापि शाब्दिकैः' । पल्लट्टन्तो पर्यस्यन् । पर्यस्तपर्याणादिना र्यस्य लः । अनेन स्यस्य टः । शेषादेशादिना टलयो र्द्वित्वम् । न्तमाणौ शतृशानचोः इति न्तआदेशः । विणशमाणो विन्यस्यत् । व्यवस्थितविभाषया स्यादिह स्यस्य टत्वाभावः । पल्लट्टो पल्लत्थो पर्यस्तः । पर्यस्तपर्याणादिना र्यस्य लः । एकत्रानेन स्तस्य टः । अन्यत्र च स्तस्य थः इति थः । लटथादेशानां द्वित्वम् ॥२२॥

## सुबोधिनी ।

र्तस्य टः स्यात् । पअट्टइ णट्टओ । प्रवर्तते नर्तकः । 'स्तस्ययोरपि वा टत्वं क्रियते क्वापि शाब्दिकैः' । पल्लट्टंतो पर्यस्यन् । पल्लट्टो पल्लत्थो पर्यस्तः । क्वापीसनेन व्यवस्थितविभाषाभिप्रैति तेनेह न भवति । विणस्सन्तो विन्यस्यन् । वेस-

नेन क्वचिदव्यवस्थितविभाषामप्यभिप्रैति उदाहृतम् ॥ २२ ॥

## मृत्तिकापत्तनयोश्च ॥२३॥

सञ्जीवनी।

ट इत्यनुवर्तते। एतयोर्युक्तस्य टः स्यात्। मट्टिआ मृत्तिका। ऋतोऽदित्यत्वम्। कगचादिना कलोपः। पट्टणं पत्तनम् ॥ २३ ॥

सुबोधिनी।

एतयोर्युक्तस्य टः स्यात्। मट्टिआ। पट्टणं ॥ २३ ॥

## न धूर्तादिषु ॥२४॥

सञ्जीवनी।

र्तस्य ट इति वर्तते। धूर्त इत्यनेन सदृशाः धूर्तादयः। तेषु धूर्तादिषु शब्देषु र्तस्य टकारादेशो न भवति। धुत्तो धूर्तः। मुहुत्तं मुहूर्तम्। मुत्तं मूर्तम् उदूतो मधूकादिषु इति उत्वम्। कत्तरी कर्तरी। आवत्तो आवर्तः। कित्ती कीर्तिः। पानीयादिषु इति इत्वम्। वत्ता वार्ता। अत्तो आर्तः। आदातो यथादिषु वेत्यत्वम्। भत्तारो कत्तारो भर्तृकर्तृशब्दयोः।

ऋत आर सुपीति आरादेशः । अत ओत् सोः इति ओत्वम् ।

धूर्तमूर्तमुहूर्तानि कर्तर्य्यावर्त्तकीर्तयः ।
वार्तार्तभर्तृकर्त्राख्या धूर्ताद्या एवमादयः ॥२४॥

सुबोधिनी ।

धूर्त्तादिषु शब्देषु र्तस्य टो न भवति ।

धूर्त्तमूर्त्तमुहूर्त्तानि कर्त्तर्य्यावर्त्तकीर्त्तयः ।
वार्त्तार्त्तभर्तृकर्त्तारो धूर्त्ताद्या एवमादयः ॥

धुत्तो मुत्तं मुहुत्तं कत्तरी आवत्तो कित्ती वत्ता अत्तो भत्तारो कत्तारो ॥ २४ ॥

## गर्ते च डः ॥२५॥

सञ्जीवनी ।

र्त इत्यनुवर्तते । गर्तशब्दे र्त्तशब्दस्य डादेशो भवति । गड्डा गर्तः । 'एवं लिङ्गविपर्यासो ज्ञेयः शब्दान्तरेष्वपि' इति स्त्रीत्वे आदीतौ बहुलमिति आप्रत्ययः ॥ २५ ॥

सुबोधिनी ।

र्तस्य डः स्यात् । गड्डो ॥ २५ ॥

## गर्दभसंमर्दवितर्दि-विच्छर्दिषु र्दस्य ॥ २६ ॥

सञ्जीवनी ।

ड इत्यनुवर्तते । एषु शब्देषु र्दस्य डादेशो भवति । रलोपबाधः । गड्डहो गर्दभः । खघथादिना भस्य हः । सम्मड्डो संमर्दः । विअड्डी वितर्दिः । कग-चादिना तलोपः । सुभिस्सुप्सु दीर्घ इति दीर्घः । विच्छड्डी विच्छर्दिः । सर्वत्र डादेशस्य द्वित्वम् । सूर्ये वे-त्यतो मण्डूकप्लुत्या वेत्यत्र सम्बद्ध्यते । तेन पक्षे रलोपोऽपि यथाप्राप्तो भवति । गद्दहो सम्मद्दो विअद्दी विच्छद्दी ॥ २६ ॥

सुबोधिनी ।

एतेषु र्दस्य डः स्यात् । गड्डहो सम्मड्डो विअड्डी विच्छड्डी मण्डूकप्लुतिन्यायेन वेत्यनुवर्त्तते । गद्दहो सम्मद्दो विअद्दी विच्छद्दी ॥ २६ ॥

## त्यथ्यद्यां चछजाः ॥ २७ ॥

सञ्जीवनी ।

त्यथ्यद्यामित्येषां यथासंख्यं चछजा इत्यादेशाः

भवन्ति। अधो मनयामित्यस्य बाधः। त्यस्य तावत्-पच्चक्खो मच्चलोओ प्रत्यक्षमर्त्यलोकयोः। सर्वत्र लवरामिति रलोपः। ष्कस्कक्षां खः इति क्षस्य खः। सच्चं णिच्चं सत्यनित्ययोः। थ्यस्य छः-रच्छा मिच्छा रथ्यामिथ्ययोः। पच्छो णेपच्छो पथ्यनेपथ्ययोः। द्यस्य जः-अज्ज विज्जा अद्यविद्ययोः। जूअं मज्जं द्यूतमद्ययोः। पडिवज्जइ प्रतिपद्यते। पद गतौ प्रति-पूर्वः। प्रतिवेतसपताकासु डः इति डः। ततिपोरिदेतौ इति प्रत्ययस्येत्वम्। 'यथाप्राप्तो यलोपोऽपि त्यथ्यद्यां क्वापि दृश्यते'। अत्तओ वत्तासो अत्ययव्यत्यासयोः। सामत्थं आइत्थं सामर्थ्यातिथ्ययोः। गद्दं अवद्दं गद्यावद्ययोः॥ २७॥

सुबोधिनी।

येषां यथासंख्यं चछज आदय आदिश्यन्ते। पच्चक्खं नेवच्छो मज्जं प्रत्यक्षं नेपथ्यं मद्यं। 'यकारप्राप्तलोपोऽपि सथ्यद्यां क्वापि दृश्यते'। अत्तओ अत्ययः सामत्थं सामर्थ्यं गद्दं गद्यम्॥ २७॥

# ध्यह्ययोर्झः॥ २८॥

सञ्जीवनी।

ध्यह्ययोर्झादेशः स्यात्। ध्यस्य-संझा संझा

सन्ध्यावन्ध्ययोः । 'आदेशस्य भवेद् द्वित्वं नानुस्वार-परस्य च' इति झस्य द्वित्वाभावः । ह्यस्य–सज्झं गुज्झं सह्यगुह्ययोः । संणज्झइ संनह्यते । संपूर्वे नह बन्धने तप्रत्ययस्य ततिपोरिदेताविति इत्वम् । मुज्झइ मुह्यति मुह वैचित्ते । पूर्ववत् तिपः इत्वम् । उभयत्रापि ह्यस्य झः । सर्वत्र झादेशस्य द्वित्वे वर्गे युज पूर्वः इति पूर्वस्य जः । 'साध्वसे ध्वस्य झादेशः झादेशस्तु विभाषया' । सज्झसं । अदातो यथादिषु वेत्यत्वम् ॥२८॥

सुबोधिनी ।

अनयोर्झः स्यात् । संझा संध्या गुझं गुह्यं । 'वक्तव्यः साध्वसे ध्वस्य झादेशोऽपि विभाषया' । सज्झसं साध्वसं ॥ २८ ॥

## ष्कस्कक्षां खः ॥ २९ ॥

सञ्जीवनी ।

ष्कस्कक्ष इत्येतषां खादेशोः स्यात् । उपरि लोपापवादः । 'स्कष्कयोरत्र खादेशो व्यवस्थितविभाषया' क्वचित् खस्य बाधः । सुक्खं सुक्कं पोक्खरं पोक्करं शुष्क पुष्करयोः । खादेशो वा । पक्षे यथाप्राप्तं उपरि लोप इत्यादिना षलोपः । उत ओत् तुण्डरूपेष्विति पुष्करशब्दे ओत्वम् । एवं णिक्खओ णिक्कओ निष्कयः ।

सर्वत्र लवरामिति रलोपः। क्वचिन्नैव खः। दुक्करं णिक्कवो। ष्कस्य क्वाचिद्भावः। खंधो स्कन्धः। क्वाचिन्नैव खः। सक्कअं संस्कृतं। मांसादिषु वेति बिन्दुलोपः। क्तोऽदिति अत्वम्। कगचादिना तलोपः। एवं संकारो संस्कारः। णमक्कारो नमस्कारः। तक्करो तस्करः। क्षस्य–जक्खो यक्षः। आदेर्यो जः इति जः। रक्खसो राक्षसः। अदातो यथादिषु वेत्यत्वम् ॥२९॥

सुबोधिनी।

एषां खः स्यात्। 'स्कष्कयोरत्र खादेशो व्यवस्थितविभाषया' तेन न खंधो स्कंधः। पोक्खरं पोकरं पुष्करमित्यादौ विकल्पेन। दुक्करं दुष्करं णिक्कंपं। निष्कम्पम्। सक्कअं संस्कृतम्। संकारो संस्कारो णमक्कारो नमस्कारः। तक्करः तस्करः। दुष्करादिषु न इत्येषु न भवत्येव। जक्खो यक्षः॥ २९॥

# अक्ष्यादिषु छः॥३०॥

सञ्जीवनी।

अक्षिशब्दसदृशाः अक्ष्यादयः। तेषु अक्ष्यादिषु क्षस्य छकारादेशः स्यात्। पूर्वेण खादेशः प्राप्तः। अच्छीइ अच्छीणि। द्विवचनस्य बहुवचनम् इति जसूप्रत्यये कृते इ जश्शसोर्दीर्घ इति इ आदेशः।

पूर्वस्य च दीर्घः । छादेशस्य द्वित्वं च । छीरं क्षीरं । छुरो क्षुरः । छेत्तं क्षेत्रं । छारं क्षारं । कुच्छी कुक्षिः । उच्छू इक्षुः । उदिक्षुवृश्चिकयोः इति इकारस्योत्वम् । सुभिस्सुप्सु दीर्घः इति दीर्घः । मच्छिआ मक्षिका । रिच्छो ऋक्षः । अयुक्तस्य रिः । लच्छी लक्ष्मीः । अधो मनयामिति मलोपः । छुहा क्षुधा खघथादिना धस्य हः । दच्छो दक्षः ।

अक्षिक्षीरक्षुरक्षेत्रक्षारकुक्षीक्षुमक्षिकाः ।
ऋक्षलक्ष्मीक्षुधादक्षा अक्ष्याद्यास्ते स्युरीदृशाः ॥३०॥

सुबोधिनी ।

एषु छः स्यात् ।

अक्षिक्षीरक्षुरक्षेत्रक्षारकुक्षीक्षुमक्षिकाः ।
ऋक्षलक्ष्मीक्षुधादक्षा अक्ष्याद्या एवमादयः ॥

अच्छीइ छीरं छुरं छेत्तं छारं कुच्छी उच्छू मच्छिआ रिच्छो लच्छी छुहा दच्छो ॥ ३० ॥

# क्ष्मावृक्षक्षणेषु वा ॥ ३१ ॥

सञ्जीवनी ।

एषु शब्देषु छकारादेशो वा भवति । ष्कस्कक्षां ख इति नित्यं खप्राप्तः । छमा खमा क्ष्मा । क्ष्माशब्दे

अः क्षमाश्लाघयोः इति क्षकारमकारयोर्विप्रकर्षः। मध्ये च अकारागमः। छत्वविकल्पे ष्कस्कक्षां ख इति खः। क्षमेति केचित् पठन्ति। तेषामपि इदमेव रूपद्वयम्। वच्छो रुक्खो वृक्षः। एकत्र ऋतोऽत् इत्यत्वम्। अन्यत्र वृक्षे त्वेन रुर्वा इति वृकारस्य रुः। खछादेशयोर्द्वित्वम्। छणो खणो क्षणः।

यत्रात्वं तत्र वृक्षे छः खत्वं तत्र तु यत्र रुः।
उत्सवार्थे क्षणे छत्वं मुहूर्तार्थे तु खो भवेत्॥ ३१॥

सुबोधिनी।

एषु क्षस्य छो वा स्यात्। छमा खमा। क्षमेति क्वचित्सूत्रं दृश्यते। तत्राप्युत्तरमेव रूपम्। वच्छो रुक्खो। छणो खणो।

यत्रात्वं तत्र वृक्षे छः खत्वं तत्र तु यत्र रुः
उत्सवार्थे क्षणे छत्वं मुहूर्त्तार्थे तु खो भवेत्॥ ३१॥

# ष्मपक्ष्मविस्मयेषु म्हः॥ ३२॥

सञ्जीवनी।

ष्मस्य पक्ष्मविस्मयशब्दयोश्च युक्तवर्णस्य म्हादेशः स्यात्। ष्मविस्मयशब्दयोः ऊर्ध्वलोपः प्राप्तः। पक्ष्मशब्दे अधो लोपे कृते ष्कस्कक्षां खः इति खादेशः प्राप्तः। ष्मस्य–गिम्हो ग्रीष्मः। सर्वत्र लवरामिति

रलोपः। इदीतः पानीयादिषु इति इत्वम्। उम्हा ऊष्मा। उदूतो मधूकादिषु इति उत्वम्। 'एवं लिङ्ग-विपर्यासो ज्ञेयः शब्दान्तरेष्वपि' इति स्त्रीत्वे 'स्त्रियामात्' इति तस्यात्वम्। अन्त्यस्य हल इति सुलोपः। पम्हो पक्ष्मा। पूर्ववत् सुलोपः। विम्हओ विस्मयः ३२॥

सुबोधनी।

ष्म इत्यस्य पक्ष्मविस्मययोश्च संयुक्तस्य म्ह इति स्यात्। गिम्हो पम्हओ विम्हओ ॥ ३२ ॥

## ह्नस्नष्णक्ष्णश्नां ण्हः॥ ३३ ॥

सञ्जीवनी।

एषां ण्हः स्यात्। ह्नस्य-जण्हू जह्नुः। अधो मनयामिति न लोपे सत्ययमादेशः। स्नस्य-ण्हानं स्नानम्। ष्णस्य-विण्हू जिण्हू विष्णुजिष्णवोः। क्ष्णस्य-तिण्हं तीक्ष्णम्। 'तीव्रार्थे तीक्ष्णशब्दे ण्हो निशितार्थे भवेत्तु खः'। लण्हं श्लक्ष्णं। 'उपरि क्वापि वक्तव्यो लोपो वर्णान्तरस्य वा' इति शलोपः। श्नस्य-पण्हा प्रश्नः। पृष्ठाक्षिप्रश्नाः स्त्रियां वेति स्त्रीत्वम्। आदीतौ बहुलमिति आप्रत्ययः। अण्हन्तो अश्नन्। अश भोजने न्तमाणौ शतृशानचोरिति न्तः॥ ३३ ॥

सुबोधनी ।

एषां ण्हः स्यात् । जण्हवी जान्हवी । जोण्हा ज्योत्स्ना । विण्हू विष्णुः । तिण्हं तीक्ष्णं । 'तीव्रार्थे तीक्ष्णशब्दे ण्हो निशितार्थे तु खो भवेत्' । तिक्खं । पण्हो प्रश्नः ॥ ३३ ॥

## चिन्हे न्धः ॥ ३४ ॥

सञ्जीवनी ।

चिन्ह इत्येतस्य न्धादेशः स्यात् । चिन्धं ॥ ३४ ॥

सुबोधनी ।

अत्र न्ह इत्यस्य न्धः स्यात् । चिन्धं ॥ ३४ ॥

## ष्पस्य फः ॥ ३५ ॥

सञ्जीवनी ।

ष्प इत्येतस्य फः स्यात् । उपरिलोपबाधः । उत्तरत्र च । पुप्फं सप्फं पुष्पशष्पयोः । णिप्फाओ निप्फण्णं निष्पापनिष्पन्नयोः । सर्वत्र फादेशस्य द्वित्वे वर्गे युज पूर्वः इति पः । 'श्लेष्मशब्दे तु फादेशः ष्म इत्यस्य प्रचक्षते' । सेप्फो श्लेष्मा । सर्वत्र लवरामिति ललोपः । शषोः स इति शस्य सः । अन्त्यस्य हल इति नलोपः । अत् ओत सोः इत्योत्वम् ॥ ३५ ॥

सुबोधिनी ।

अस्य फः स्यात् । पुष्फं पुष्पं । 'शेष्मशब्दे तु फादेशः ष्म इत्यस्य प्रचक्षते' । सेप्फो ॥ ३५ ॥

# स्पस्य ॥ ३६ ॥

सञ्जीवनी ।

फ इत्यनुवर्तते । स्पस्य फादेशः स्यात् । फंसो स्पर्शः । वक्रादिषु इति बिन्द्वागमः । सर्वत्र लवरामिति लोपे कृते 'बिन्द्वादीदूत्परस्येह द्वित्वं शेषस्य नेष्यते' इति सस्य न द्वित्वम् । फिहइ स्पृहयपि । स्पृह ईप्सायाम् । ततिपोरिदेतौ इति तिप इत्वम् । अडादेशा बहुलमिति ऋकारस्य इत्वम् । 'लोपः साचो यकारस्य क्वचिन्नित्यं क्वचिन्न वा' इति यलोपः । 'छादेशोऽपि स्पशब्दस्य पण्डितैरिष्यते क्वचित्' । छिहा स्पृहा । इदृष्यादिषु वेति ऋकारस्य इत्वम् ॥ ३६ ॥

सुबोधिनी ।

स्पस्य फः स्यात् । फंसो स्पर्शः । 'क्वचित्सस्य क्वचित्पस्य लोपः स्पाक्षर इष्यते' परोप्परं परस्परं । वनस्सई वनस्पतिः । सिहई स्पृहयति । 'छादेशोऽपि स्पशब्दस्य क्रियते क्वापि पण्डितैः' । छिहा स्पृहा ॥ ३६ ॥

## बाष्पेऽश्रुणि हः ॥ ३७ ॥

सञ्जीवनी ।

बाष्पशब्दे अश्रुणि अर्थे ष्प इत्यस्य हादेशः स्यात् । बाहो बाष्पः । अश्रुणि इति किम् ? बप्फो । 'अज्ज कस्स पुरदो बप्फमोक्खं करइस्सं' इत्यत्र अश्रुण्यर्थे कथं फादेशः इति ? ब्रूमः—अश्रुणि हः इत्यत्र योगव्यावृत्तौ फादेशस्य बाध एव स्यात् । 'क्वचित् दक्षिणशब्दस्य क्षस्य हादेश इष्यते'। दाहिणो दक्षिणः। आ समृद्ध्यादिषु वा इत्यात्वम् । क्वचिद् ग्रहणात् सर्वत्र न भवति । दक्खिणो । ष्कस्कक्षां ख इति खः । दक्खिणणं दाक्षिण्यम् । अदातो यथादिषु वेत्यत्वम् । अधो मनयामिति यलोपः । क्षस्य पूर्ववत् खः ॥ ३७ ॥

सुबोधनी ।

अश्रुणि वर्त्तमाने बाष्पशब्दे ष्प इत्यस्य हः स्यात् । बाहो । अश्रुणीति किम् ? मण्डूकप्लुतिन्यायाद्वेति संबध्यते । तेन अज्ज कस्स पुरदो बप्फमोक्खं करइस्सं इत्यादावश्रुण्यपि फादेशः । 'क्वचिद्दक्षिणशब्देऽपि क्षस्य हादेश इष्यते'। दाहिणो दक्षिणः॥३७॥

## कार्षापणे ॥ ३८ ॥

सञ्जीवनी ।

ह इत्यनुवर्तते । कार्षापणशब्दे युक्तवर्णस्य हादेशः स्यात् । रलोपः प्राप्तः । कहावणो कार्षापणः । अदातो यथादिषु वेत्यत्वम् । पो वः इति वः ॥ ३८ ॥

सुबोधनी ।

अत्र युक्तस्य हः स्यात् । कहावणो ॥ ३८ ॥

## श्चत्सप्सां छः ॥ ३९ ॥

सञ्जीवनी ।

इत्येतेषां छ आदेशः स्यात् । उपरि लोप इत्यादिना लोपः प्राप्तः । श्चस्य-णिच्छओ पच्छिमो निश्चयपश्चिमयोः । त्सस्य-वच्छो उच्छाहो वत्सो-त्साहयोः । प्सस्य-लिच्छा जुउच्छा लिप्साजुगुप्सयोः । 'श्चत्सयोः क्वापि छादेशो न मन्यन्ते मनीषिणः' । णिच्चलो निश्चलः । छादेशे निषिद्धे 'उपरि क्वापि वक्तव्यो लोपो वर्णान्तरस्य च' इति शलोपः । इह तु वा । ऊसित्तो उत्सिक्तः । 'ईदूताविदुतोः स्थाने स्यातां लक्ष्यानुरोधतः' इत्यूत्वम् । उपरि लोप इत्यादिना तकयोर्लोपः । तस्य द्वित्वम् । सस्य न भवति । 'विन्ध्या-दीदूत्परस्येह द्वित्वं शेषस्य नेष्यते' इति निषेधात् ।

पक्षे उच्छित्तो । 'साद्दश्येऽपि इयशब्दस्य छत्वमिच्छन्ति केचन' । सारिच्छं । युक्तस्यापि मध्य इति ऋकारस्य इत्वम् ॥ ३९ ॥

सुबोधिनी ।

एषां छः स्यात् । णिच्छओ निश्चयः । उच्छाहो उत्साहः । जुउच्छा जुगुप्सा । 'छादेशःश्चत्सयोः क्वापि न मन्यन्ते मनीषिणः' । णिच्चलो निश्चलः । ऊसित्तो उच्छित्तो उत्सिक्तः ॥३९॥

# वृश्चिके ञ्छुः ॥ ४० ॥

सञ्जीवनी ।

वृश्चिकशब्दे श्चस्य ञ्छ आदेशः स्यात् । पूर्वेण छादेशः प्राप्तः । विञ्छुओ । उदिक्षुवृश्चिकयोरिति इकारस्य उत्वम् । इदृष्यादिषु इति ऋकारस्य इत्वम् ॥ ४० ॥

सुबोधनी ।

अस्य ञ्छः स्यात् । विञ्छुओ ॥ ४० ॥

# नोत्सुकोत्सवयोः ॥ ४१ ॥

सञ्जीवनी ।

उत्सुकोत्सवयोः त्सस्य छादेशो न भवति ।

श्चत्सप्सामिति छः प्राप्तः। ऊसुओ उत्सुकः। ऊसओ उत्सवः 'ईदूताविदुतोः स्थाने स्यातां लक्ष्यानुरोधतः' इत्यूत्वम्। उपरि लोप इत्यादिना तलोपे कृते 'विन्द्वादीदूत्परस्येह द्वित्वं शेषस्य नेष्यते' इति सस्य द्वित्वं न भवति॥ ४१॥

सुबोधनी।

एतयोः त्सस्य छो न स्यात्। ऊसुओ ऊसओ॥ ४१॥

# न्मो मः॥ ४२॥

सञ्जीवनी।

न्म इत्यक्षरं षष्ठ्यन्तम्। न्मशब्दस्य मः स्यात्। अधोलोपबाधः। वम्महो मन्मथः। मन्मथे वः इति मस्य वः। खघथादिना थस्य हः। उम्माओ उन्मादः। कगचादिना दलोपः। सम्मग्गो सन्मार्गः। अदातो यथादिषु वा इति अत्वम्। सर्वत्र लवरामिति रलोपः। गस्य द्वित्वम्। जम्मो जन्म। अन्त्यस्य हल इति नलोपः। नसन्तप्रावृट्शरदः पुंसीति पुंस्त्वे अत ओत् सोरिति ओत्वम्। क्वचिदपि लोपः इत्यलोपः। सर्वत्र आदेशस्य द्वित्वम्॥ ४२॥

सुबोधनी।

अस्य मः स्यात्। उम्माओ उन्मादः॥ ४२॥

## म्नज्ञपञ्चाशत्पञ्चदशसु णः ॥ ४३ ॥

सञ्जीवनी ।

म्नज्ञयोः पञ्चाशत् पञ्चदश इत्येतयोश्च युक्तवर्णस्य णः स्यात् । म्नस्य अधो मनयामिति मलोपः प्राप्तः । ज्ञस्य तु सर्वज्ञतुल्येषु ञः इति लोपः प्राप्तः । तौ बाध्येते । म्नस्य-पज्जुण्णो प्रद्युम्नः । त्यथ्यद्यां चछजा इति द्यस्य जः । णिण्णआ निम्नगा । ज्ञस्य-अहिण्णाणं विण्णाणं अभिज्ञानविज्ञानयोः । पण्णासा पञ्चाशत् । शषोः सः इति शस्य सः स्त्रियामात् इति तकारस्य आत्वम् । पण्णरह । जश्शसोर्लोप इति जश्शसोर्लोपः । सर्वत्र आदेशस्य द्वित्वम् ॥ ४३ ॥

सुबोधनी ।

म्नज्ञयोः पंचाशत् पंचदश इत्येतयोर्यो युक्तस्तस्य च णः स्यात् । णिण्णआ निम्नगा । अहिण्णाणं अभिज्ञानं । पण्णासा । पण्णरह ॥ ४३ ॥

## तालवृन्ते ण्टः ॥ ४४ ॥

सञ्जीवनी ।

तालवृन्तशब्दे युक्तवर्णस्य ण्टादेशः स्यात् । तालवेंटं । ऋतोऽत् इत्यत्वम् । ए च शय्यादिषु

इत्येत्वम् । वृन्तशब्दस्य प्राधान्येनाभिप्रेतत्वात् तालोपपदं विनापि ण्टादेशः स्यात् । वेन्टं वृन्तम् ॥४४॥

सुबोधिनी ।

अत्र युक्तस्य ण्टः स्यात् । तालवेण्टं । वृन्तशब्दस्य प्राधान्येनाभिप्रेतत्वात्तालोपपदं विनापि ण्टादेशः स्यात् । बेंटं वृन्तम् ॥४४॥

# भिन्दिपाले ण्डः ॥ ४५ ॥

सञ्जीवनी ।

भिन्दिपालशब्दे युक्तस्य ण्डादेशः स्यात् । भिंडिआलो ॥ ४५ ॥

सुबोधिनी ।

भिन्दिपालशब्दे युक्तस्य ण्डादेशः स्यात् । भिंडिआलो ॥४५॥

# विह्वले भो वा ॥ ४६ ॥

सञ्जीवनी ।

विह्वलशब्दे युक्तस्य भादेशः स्याद्वा । वलोपः प्राप्तः । भिब्भलो । आदेश्चेत्युत्तरसूत्रेण वा वस्य भः । पक्षे विहलो । 'ह्वस्य भः क्वचिदन्यत्र गोजिह्वादावपीष्यते' । गोइब्भा ॥ ४६ ॥

सुबोधिनी ।

अत्र युक्तस्य भो वा स्यात् । भिब्भलो विह्लो विह्लः । 'ह्वस्य भः क्वचिदन्यत्र गोजिह्वादावपीष्यते' । गोइब्भा ॥ ४६ ॥

# आदेश्च ॥ ४७ ॥

सञ्जीवनी ।

विह्वले भो वा इत्यनुवर्तते । विह्वलशब्दे आदेर्वर्णस्य भः स्यात् वा । भिब्भलो । 'विह्वले यौगपद्येन स्यात् भो विह्वयोर्न वा' । ननु युक्ताधिकारे कथमयुक्तविधिरुच्यते विह्वलशब्दस्थतावशात् ॥ ४७ ॥

सुबोधिनी ।

विह्वलशब्दे आदेर्भो वा स्यात् । 'विह्वले यौगपद्येन स्यातां तौ विह्वयोर्न वा' । उदाहृतं । युक्ताधिकारेऽयुक्तविधिः प्रस्तावाल्लाघवनार्थम् । वयं तु नायमयुक्तविधिः स्वतन्त्रः । किं नाम यदैवादेर्भकारस्तदैव परं युक्तस्यापि इति युगपद्विधिबोधनार्थं युक्तविधेरेवाऽनुचर इति संदिष्टं सूत्रद्वयमित्युन्नयामः ॥ ४७ ॥

# आत्मनि पः ॥४८ ॥

सञ्जीवनी ।

वेत्यनुवर्तते । आत्मशब्दे युक्तवर्णस्य पः स्याद्वा ।

अधो मनयामिति मलोपः प्राप्तः । अप्पा अत्ता आत्मा । इत्वद्वित्ववर्जमित्यादिना राजवद्भावे राज्ञश्च इत्यन्त्यस्यात्वम् । पक्षे अप्पाणो । 'अविकल्पेन पादेशो माहात्म्ये प्रतिपाद्यते' । माहप्पं । अदातो यथादिषु वेत्यत्वम् । अधो मनयामिति यलोपः ॥४८॥

सुबोधिनी ।

अत्र युक्तस्य पः स्यात् । अप्पा अप्पाणो । एष निपातः 'अविकल्पेन पादेशो माहात्म्ये प्रतिपाद्यते' । माहप्पं ॥ ४८ ॥

## क्मस्य ॥ ४९ ॥

सञ्जीवनी ।

प इत्यनुवर्तते । क्मइत्यस्य पकारादेशः स्यात् । रुप्पं रुप्पिणी रुक्मरुक्मिण्योः । योगविभागो विकल्पनिवृत्त्यर्थः । 'भवति स्थानिनः ड्मस्य कुड्मलेऽपि पकारता' । कुंपलं । वक्रादिष्विति बिन्द्वागमः । 'त्वस्य स्थाने क्चौ क्वापि ग्धवृद्धध्येषु ढः क्वचित्' । त्वस्य कः-मउक्कं मृदुत्वम् । ऋतोऽदिति अत्वम् । कगचादिना दलोपः । त्वस्य चः-चच्चरं चत्वरम् । ग्धस्य ढः-विअड्ढो विदग्धः । परिअड्ढी परिवृद्धिः । वुड्ढो वृद्धः । उदृत्वादिषु इत्यृकारस्य उत्वम् । थड्ढो स्तब्धः । स्तस्य थ इति थः । क्वापीति वचनात् सर्वत्र न भवति ।

गत्तरो गत्वरः । संदिद्धो संदिग्धः । णिसिद्धो निषिद्धः । लद्धो लब्धः ॥ ४९ ॥

सुबोधिनी ।

अत्र पः स्यात् । योगविभागो विकल्पनिवृत्त्यर्थः । रुप्पिणी रुक्मिणी । 'भवति स्थानिनो ड्मस्य कुड्मलेऽपि पकारता' कुंपलं । 'त्वस्य स्थाने कचौ क्वापि ग्धद्धध्येषु ढः क्वचित् ।' मउक्कं मृदुत्वम् । चच्चरं चत्वरं । विअड्ढो विदग्धः । णिसिद्धो निषिद्धः । लद्धो लब्धः ॥ ४९ ॥

# शेषादेशयोर्द्वित्वमनादौ ॥५०॥

सञ्जीवनी ।

युक्तस्य इत्येव । शेषश्च आदेशश्च शेषादेशौ । अनादौ वर्तमानयोः युक्तवर्णसम्बन्धिनोः शेषादेशयोः द्वित्वम् । उपरि लोप इत्यादिना सूत्रेण युक्तवर्णस्य एकदेशलोपे कृते यः शेषः अवशिष्टः तथा स्तस्य थ इत्यादिभिर्युक्तस्य विहितो य आदेशः, तयोर्द्वित्वं भवतीत्यर्थः । शेषस्य तावत्-आसत्तो आसक्तः । तक्करो तस्करः । उपरि लोप इत्यादिना कसयोर्लोपे कृते शेषयोः तकयोः द्वित्वम् । लग्गं भोज्जं लग्नभोज्ययोः । अधो मनयामिति नययोर्लोपे

कृते शेषयोर्गजयोः द्वित्वम्। उक्का विप्पओ उल्का-विप्लवयोः। सर्वत्र लवरामिति ललोपे कृते शेषयोः कपयोर्द्वित्वम्। णिव्विण्णो निर्विण्णः। आदेशस्य-मज्जाआ मर्यादा। र्यशय्याभिमन्युषु जः इति यस्य जः। पल्लाणं पर्याणम्। पर्यस्तपर्याणादिना र्यस्य लः। गड्डा गर्तः। गर्तस्य डः। पच्चओ आओज्जं प्रत्ययातोद्ययोः। त्यथ्यद्यां चछजा इति त्यद्ययोः चजौ। अनादाविति किम्? शेषस्य-थविरो स्थविरः। उपरि लोप इत्यादिना सलोपः। चवनो च्यवनः। धओ ध्वजः। सर्वत्र लवरामिति यवयोर्लोपः। आदेशस्य-थवओ स्तवकः स्तस्य थ इति थः। फंदो स्पन्दः। स्पस्येति स्पस्य फः। झाणं ध्यानं। ध्यह्ययोर्झः इति ध्यस्य झः। खीणो क्षीणः। ष्कस्कक्षां ख इति क्षस्य खः। युक्तस्येति किम्? असई कामुओ असतीकामुकयोः। कगचादिना तकयोर्लोपे कृते यौ शेषौ। तडो तटः। टो ड इति टस्य डः। तलाओ तडागः। डस्य ल इति लः। विसेसो विशेषः। शषोः स इति शषयोः सः। 'बिन्द्वादीदूत्परस्येह द्वित्वं शेषस्य नेष्यते'। बिन्दोः-संखा संख्या। बंको वक्रः। वक्रादिषु इति बिन्द्वागमः। आतः-बाणसओ पासिण्णं वर्णशत-प्रस्विन्नयोः। आ समृद्ध्यादिषु वेति आत्वम्। ईतः-णीसंदो निष्यन्दः। 'इदूताविदुतोः स्थाने स्यातां लक्ष्या-

नुरोधतः' इति ईत्वम् । ईसरो ईश्वरः । ऊतः-ऊसित्तो ऊसुओ उत्सिक्तोत्सुकयोः । पूर्वेण ऊत्वम् । 'आदेशस्य भवेद्द्वित्वं नानुस्वारपरस्य तु' । संझा सन्ध्या । विंझा विन्ध्या ॥ ५० ॥

सुबोधिनी ।

शेषश्च आदेशश्च तौ शेषादेशौ । संयुक्तस्याधःस्थिते उपरिस्थिते वा व्यंजने लुप्ते यद् व्यञ्जनं अवशिष्टं तच्छेषः । यच्च युक्तस्यैव स्थाने आदिष्टं तदादेशः । तयोर्द्वित्वं स्यादनादौ स्थितौ चेत् । पूर्वउदाहरणप्रपञ्चः पूर्वत्रैवानुसन्धेयः । दिङ्मात्रमुदाह्रियते । भुत्ती भुक्तिः । रस्सओ रश्मयः । चेट्ठा चेष्टा । युक्तस्येति किम् ? कामुओ कामुकः । मसिणं मसृणं । अनादाविति किम् ? थविरा स्थविरा । धओ ध्वजः । थवओ स्तवकः । 'विन्द्वादीदूत्परस्येह द्वित्वं शेषस्य नेष्यते' । संखा संख्या । पासिण्णो प्रस्विन्नः । णीसंदो निस्पन्दः ऊसुओ । 'आदेशस्य भवेद्द्वित्वं नानुस्वारपरस्य तु' । विंझो विंध्यः ॥ ५० ॥

# वर्गे युजः पूर्वः ॥ ५१ ॥

सञ्जीवनी ।

'अर्थवशात् विभक्तिपरिणामः' इति वचनात् द्वित्वशब्दे सप्तम्यन्ते पूर्वसूत्रमनुवर्तते । अनादौ

स्थितयोः शेषादेशयोः वर्गे मध्ये युजः समसंख्यस्य द्वितीयस्य चतुर्थस्य द्वित्वे क्रियमाणे तस्मादेव युजः पूर्वः यथाक्रमं प्रथमस्तृतीयो यो वर्णः स सर्वत्र भवति । वर्गाश्च कखगघङ इत्यादयः पञ्च पञ्चकाः इति । शेषस्य द्वित्वम्–सोक्खं सौख्यं । अधो मनयामिति यलोपः । औत ओदित्योत्वम् । विग्घो विघ्नः । अधो मनयामिति नलोपः । वग्घओ व्याघ्रः । सर्वत्र लवरामिति रलोपः । अदातो यथादिषु वेत्यत्वम् । मुच्छिओ मूर्छितः । उदूतो मधुकादिषु इति उत्वम् । ओज्झरो निर्झरः । 'ओत्वं सह नकारेण स्यादितो निर्झरेऽपि वा' इत्योत्वम् । सर्वत्र लवरामिति रलोपः । गोट्ठी गोष्ठी । उपरि इत्यादिना सलोपः । गुणड्ढो गुणाढ्यः । अधो मनयामिति यलोपः । अदातो यथादिष्वित्यत्वम् । पत्थिओ पार्थिवः । पूर्ववदत्वम् । अद्धओ अध्वगः । सर्वत्र लवरामिति रवयोर्लोपः । गुप्फो गुल्फः । पूर्ववत् ललोपः । अब्भासो अभ्यासः । अधो मनयामिति यलोपः । आदेशस्य वः । णक्खत्तं नक्षत्रम् । ष्कस्कक्षामिति क्षस्य खः । लच्छी लक्ष्मीः । अक्ष्यादिषु छः उवज्झाओ उपाध्यायः । अदातो यथादिषु वा इत्यत्वम् । ध्यह्यर्योर्झ इति ध्यस्य झः । धिट्ठो धृष्टः । इदृष्यादिष्विति ऋकारस्येत्वम् । ष्टस्य ठः । वुड्ढो वृद्धः ।

उद्वृत्त्यादिषु इति ऋकारस्योत्वम् । 'त्वस्य स्थाने कचौ क्वापि ग्धद्ध्धेष्वपि ढः क्वचित्' इति ध्वस्य ढः । बीसत्थो विश्रस्तः । 'ईदूतावितुतोः स्थाने स्यातां लक्ष्यानुरोधतः' इतीत्वम् । सर्वत्र लवरामिति वलोपः । स्तस्य थ इति थः । पुप्फिअं पुष्पितम् । स्पस्य फः इति फः । भिब्भलो विह्वलः । विह्वले भो ह्रो वा इति ह्वस्य भः । आदेश्चेति वस्य भः ॥ ५१ ॥

सुबोधिनी ।

द्वित्वमित्यर्थवशाद्विभक्तिविपरिणामेनानुवर्त्तते । वर्गे कवर्गादिपंचकेषु युजः समाक्षरस्य द्वितीयस्य चतुर्थस्य वा पूर्वसूत्रेण द्वित्वे क्रियमाणे पूर्वः स्वाव्यवहितपूर्वस्थो वर्ण उपरिगतो भवति । दिङ्मात्रमुदाह्रियते । सोक्खं सौख्यम् । मोक्खो मोक्षः । वग्घो व्याघ्रः । वर्गान्तरे स्वयमुदाहरणमूह्यम् ॥ ५१ ॥

# नीडादिषु ॥ ५२ ॥

सञ्जीवनी ।

द्वित्वमनादौ इत्यनुवर्तते । नीडशब्देन सदृशाः नीडादयः । तेषु अनादौ स्थितस्य वा डस्य द्वित्वम् । अशेषादेशार्थं वचनम् । णेड्डं नीडम् । एन्नीडादिना इकारस्येत्वम् । जोव्वणं यौवनं । औत ओदिति ओत्वम् ।

तुण्हिक्को तूष्णीकः ।उदूतो मधूकादिषु इति उत्त्वम् । ह्रस्लष्णक्ष्णश्नां ण्हः इति ण्हः । कस्य द्वित्वम् । पेम्मं प्रेम । अन्त्यस्य हल इति नलोपः । 'नान्तं नपुंसकं विद्धि पुल्लिङ्गेऽपि प्रचक्षते' इति नपुंसकत्वात् नपुंसके सोर्बिन्दुरिति बिन्दुः।एक्को एकः । वाहित्तो व्याहृतः। अधो मनयामिति यलोपः । इदृष्यादिष्विति ऋकारस्येत्वम् । उज्जुओ ऋजुकः । उदृत्वादिष्विति ऋकारस्योत्वम् । स्वार्थे को वेति कः । तस्य कगचादिना लोपः । अत ओत् सोः इति ओत्वम् । क्वचिदपि लोप इत्यलोपः । सोत्तो स्रोतः । अन्त्यस्य हल इति सलोपः । नसन्तप्रावृट्शरदः पुंसीति पुंस्त्वात् अत ओत् सोरिति ओत्वम् । चल्लिओ चलितः । मण्डुक्को मण्डूकः । उदूतो मधुकादिषु इत्युत्वम् ।

नीडयौवनतूष्णीकाः प्रेमैकव्याहृतर्जुकाः ।
स्रोतश्चलितमण्डूका नीडाद्या एवमादयः ॥ ५२ ॥

सुबोधिनी ।

नीडादिषु शब्देषु अनादेर्व्यञ्जनस्य द्वित्वं स्यात् ।

नीडयौवनतूष्णीकाःप्रेमैकव्याहृतर्जवः ।
स्रोतश्चलितमण्डूका नीडाद्या एवमादयः ॥

णेड्डं जोव्वणं तुण्हिक्को पेम्मो एक्को वाहित्तो उज्जुओ सोत्तो चल्लिओ मंडुक्को ॥ ५२ ॥

# आम्रताम्रयोर्वः ॥ ५३ ॥

सञ्जीवनी ।

द्वित्वमित्यनुवर्तते । शेषस्य द्वित्वे वकारादेशः स्यात् । स चैकदेश एव लक्ष्यवशात् । अंवं तंवं । अदातो यथादिषु वेत्यत्वम् ॥ ५३ ॥

सुबोधिनी ।

अनयोर्द्वित्वे वादेशः स्यात् । स चैकदेश एव लक्ष्यवशात् । अंवो तंवो ॥ ५३ ॥

# न रहोः ॥ ५४ ॥

सञ्जीवनी ।

शेषादेशयोर्द्वित्वमनुवर्तते । रेफहकारयोर्युक्तवर्णसम्बन्धिनोः शेषयोरादेशयोश्च द्वित्वं न भवति । सुंदेरं सौन्दर्यम् । उत् सौन्दर्यादिषु इत्यौकारस्योत्वम् । ए च शय्यादिषु इति एत्वम् । तूर्यधैर्यादिना र्यस्य रः । अच्छेरं आश्चर्यम् । अदातो यथादिषु वेत्यत्वम् । श्चप्सत्सां छः इति छः । एत्वमत्वं च पूर्ववत् । पेरंतो पर्यन्तः । पूर्ववदेत्वरत्वे । विहलो विह्वलः ।

सर्वत्र लवरामिति वलोपः। काहावणो कार्षापणः। अदातो यथादिषु वेत्यत्वम्। कार्षापणे हः इति र्षस्य हः। पो व इति वः॥ ५४॥

सुबोधिनी।

रेफहकारयोर्द्वित्वं न स्यात्। शेषादिसूत्रेण प्राप्तस्य बाधः। सुंदेरं सौन्दर्यम्। काहावणो कार्षापणः॥ ५४॥

## आङो ज्ञादेशस्य॥ ५५॥

सञ्जीवनी।

ज्ञस्य आदेशः ज्ञादेशः। नेत्यनुवर्तते। आङः परस्य ज्ञस्य यो ण आदेशः तस्य द्वित्वं न भवति। आणा आज्ञा। म्नज्ञादिना ज्ञस्य णः। आणत्ती आज्ञप्तिः। पूर्ववत् ज्ञस्य णः। सुभिस्सुप्सु दीर्घ इति दीर्घः। आङ इति किम्? अहिण्णाणं अभिज्ञानं। विण्णाणं विज्ञानम्॥ ५५॥

सुबोधिनी।

ज्ञस्यादेशो ज्ञादेशः। आङः परस्य ज्ञादेशस्य द्वित्वं न स्यात्। आणा आज्ञा। आङ इति किम्? विण्णानं विज्ञानम्॥ ५५॥

# समासे वा ॥ ५६ ॥

सञ्जीवनी।

शेषादेशयोरित्यनुवर्तते। समासः शब्दानामैकपद्यम्। तत्र स्थितयोः शेषादेशयो र्द्वित्वं वा भवति। शेषस्य—मरुत्थली मरुथली मरुस्थली। उपरि लोप इत्यादिना सलोपः। थस्य द्वित्वे वर्गे युज पूर्व इति पूर्वस्य तः। गुणज्जेट्ठो गुणजेट्ठो गुणज्येष्ठः। अधो मनयामिति यलोपः। घरद्दारं घरदारं गृहद्वारम्। गृहस्य घरोऽपतौ इति गृहस्य घरादेशः। सर्वत्र लवरामिति वलोपः। अत्थग्गहो अत्थगहो अर्थग्रहः। रलोपः पूर्ववत्। आदेशस्य—घणत्थणी घणथणी घनस्तनी विरहक्खमा विरहखमा विरहक्षमा। स्कष्कक्षामिति क्षस्य खः। तस्य द्वित्वे वर्गे युजः पूर्व इति कः। अङ्गप्फंसो अंगफंसो अङ्गस्पर्शः। स्पस्य फः इति फः। तस्य द्वित्वे वर्गे युजः पूर्व इति पः। वक्रादिष्विति बिन्द्वागमः। 'द्वित्वं क्वापि समासे स्यात् अशेषादेशयोरपि'। सप्पिपासो सपिपासो सह पिपासया वर्तते इति सपिपासः। बहुप्फलो बहुफलो बहुं फलं येन यस्य वा स बहुफलः। सिहरक्खण्डो सिहरखंडो शिखरखण्डः। एवमादयः॥ ५६ ॥

सुबोधिनी ।

समासवशादनादितामापन्नयोः शेषादेशयोर्द्वित्वं वा स्यात् । णअणप्पिआ णअणपिआ । घणत्थणी घणथणी । 'द्वित्वं क्वापि समासे स्यादशेषादेशयोरपि' । सप्पियासो सपियासो सपिपासः । वद्धप्फलो वद्धफलो । सिहरखंडो सिखरखण्डः । एवमादिषु ॥ ५६ ॥

# सेवादिषु च ॥ ५७ ॥

सञ्जीवनी ।

द्वित्वमनुवर्तते । सेवाशब्देन सदृशाः सेवादयः । तेषु सेवादिषु शब्देषु शेषादेशयोश्चनादौ द्वित्वं वा भवति । अप्राप्तविकल्पोऽयम् । सेव्वा सेवा सेवैव । कोउहल्लं कोउहलं कौतूहलम् । औत ओदित्योत्वम् । उदूतो मधुमादिष्विति उत्वम् । देव्वं दइवं दैवम् । द्वित्वादन्यत्र 'दैवे वा' इत्यनेन ऐकारस्य अइ आदेशः । णिहित्तं णिहिअं । द्वित्वादन्यत्र कगचादिना तलोपः । णक्खो णहो नखः । एकत्र द्वित्वे वर्गे युजः पूर्व इति कः । अन्यत्र खघथादिना खस्य हः । संखप्पिव, संखम्मिव, संखव्विव, संखव्व शंख इव । इवपिवमिवविव व्व इवार्थे निपातिताः । पक्षे संखो-

णिअ, संखोमिव, संखोविअ संखोत्र । सन्धावचा-
मित्यादिना शंख इत्यत्र अकारस्योत्वम् । अदातो
यथादिषु वेति वाशब्दस्य अत्वे कृते द्वित्वम् । जण्णुअं
जाणुअं जानुकम् । यत्र अदातो यथादिषु वेति अत्वं
तत्र णस्य द्वित्वम् । स्वार्थे को वेति कप्रत्ययः । तस्य
कगचादिना लोपः । नपुंसके सोर्बिन्दुरिति बिन्दुः ।
तइलोक्कं तइलोअं त्रैलोक्यम् । दैत्यादिष्वादैकारस्य
अइआदेशः । रेफलोपः । द्वित्वादन्यत्र कस्य कगचा-
दिना लोपः । कण्णिआरो कणिआरो कर्णिकारः ।
सर्वत्र लवरामिति रेफलोपः । वेस्सा वेसा वेश्या ।
अधो मनयामिति यलोपः । भुज्जा भुआ भूर्जा । उ-
दूतो मधूकादिषु इत्युत्वम् । रलोपे कृते द्वित्वादन्यत्र
जस्य कगचादिना लोपः । दुक्खिओ दुहिओ
दुःखितः । उपरि लोप इत्यादिना लोपे कृते
द्वित्वादन्यत्र खस्य खघथादिना हः ।

सेवा कौतूहलं दैवं निहितं नखजानुनी ।
सेवादिपठिताः शब्दा एतदाद्यास्तथापराः ॥
त्रैलोक्यं कर्णिकारश्च वेश्या भूर्जा च दुःखितः ।
एवं जातीयकान् शब्दान् विदुः सेवादिकांस्तथा ॥

ननु रत्ती राई रात्रिः । अदातो यथादिषु
वेत्यत्वम् । अस्सो आसो अश्वः । आ समृद्ध्यादिषु

वेत्यात्त्वम् । तथा दिग्घो दीहो दीर्घः । इस्सरो ईसरो ईश्वरः। इदीतः पानीयादिषु इति एकत्र पक्षे इत्वम्। तथा पुस्सो पुसो पुष्यः । उस्सासो ऊसासो उच्छ्‌वासः । पूर्ववत् एकत्र पक्षे ऊत्वम्। इत्यादयः किमिति नोदाह्रियन्ते। दृश्यते ह्येषां द्वित्वविकल्पः। न। प्रकारान्तरेण सिद्धत्वात्। यलोपे तावत् ईदूतौ परेषां 'बिन्द्वादीदूत्परस्येह द्वित्वं शेषस्य नेष्यते' इति द्वित्वप्रतिषेधात् । अन्येषां तु शेषद्वित्वादेव द्वित्वं पर्यवस्यतीति नैवार्थ एतैरेवमुदाहरणैः ॥ ५७ ॥

सुबोधनी।

सेवादिशब्देषु शेषादेशयोश्चानादौ द्वित्वं स्यात् वा। अप्राप्ताप्राप्तविकल्पोऽयम् ।

सेवा कौतूहलं दैवं निहितं नखजानुनी ।
इवार्थका निपाताश्च एतदाद्यांस्तथापरान् ॥
त्रैलोक्यं कर्णिकारश्च वेश्या भूर्जश्च दुःखितः ।
एवं जातीयकान् शब्दान् विन्दुः सेवादिकान् बुधाः ॥

सेव्वा सेवा। कोउहल्लं कोउहलं । देव्वं दइवं । णिहित्तं णिहिअं। णक्खो णहो। जण्णुअं जाणुअं। संखप्पिअ संखम्मिअ संखव्विअ संखव्व शंखइव। एते इवार्था निपाताः । पक्षे संखोपिअ संखोमिअ संखोविअ संखोव। तइल्लोक्कं तइलोअं कण्णिआरो कणिआरो । वेस्सा वेसा । भुज्जं भुअं

दुक्खिओ दुहिओ ॥ ५७ ॥

# विकर्षः ॥ ५८ ॥

सञ्जीवनी ।

अधिकारोऽयम् । यदित ऊर्ध्वमनुक्रमिष्यामस्तत्र युक्तवर्णस्य विकर्षो भवतीति अधिकृतं वेदितव्यम् । अयमधिकार आ परिच्छेदपरिसमाप्तेः ॥ ५८ ॥

सुबोधिनी ।

अतः परं युक्तस्य वर्णस्य विकर्षो विश्लेषो वेदितव्यः । अधिकारसूत्रमिदम् ॥५८॥

# क्लिष्टश्लिष्टरत्नक्रियाशार्ङ्गेषु तत्-स्वरवत् पूर्वस्य ॥ ५९ ॥

सञ्जीवनी ।

क्लिष्टादिशब्देषु पञ्चसु युक्तवर्णस्य विकर्षो भवति । तस्य स्वरः तत्स्वरः । तत्स्वर इव तत्स्वरवत् । तस्य युक्तस्य यः स्वरः तद्वत् तत्सदृशः स्वरः विकर्षे पूर्वस्य युक्तवर्णस्य भवति । रत्नशब्दे अधो मनयामिति लोपः । अन्यत्र सर्वत्र लवरामिति लोपः प्राप्तः । किलिट्ठं सिलिट्ठं क्लिष्टश्लिष्टयोः । ष्टस्य ठ

इति ठः। तस्य द्वित्वे वर्गे युजः पूर्व इति टः। अत्र क्रमप्राप्तत्वात् क्लिश्लि एतयोरेव विकर्षः। न तु ष्टस्य। रअणं रत्नम्। तनयोर्विकर्षः। पूर्वस्य तकारस्य तत्स्वरवत स्वरे कृते कगचादिना लोपः। नो णः इति णः। किरिआ सारंगो क्रियाशार्ङ्गयोः॥ ५९॥

सुबोधिनी।

एषु युक्तस्य विकर्षो भवति। तत्स्वरवत् युक्तवर्णस्य यः स्वरः स एव विकर्षावस्थायामपि पूर्ववर्णस्य भवति। किलिट्ठं सिलिट्ठं। अत्र क्रमप्राप्तविकल्पत्वात् क्लिश्लि इत्येतयोर्विप्रकर्षो न तु ष्टस्य। रअणं किरिआ सारङ्गो॥ ५९॥

# कृष्णे वा॥ ६०॥

सञ्जीवनी।

तत्स्वरवत् पूर्वस्येत्यनुवर्तते। कृष्णशब्दे युक्तवर्णस्य विकर्षः स्यात्। पूर्वस्य तत्स्वरवत् स्वरो भवति। ह्लक्ष्णस्नानां ण्हः इति ण्हादेशः प्राप्तः। कसणो। ऋतोऽदित्यत्वम्। शषोः स इति षस्य सः। पक्षे कण्हो। 'कृष्णशब्दे विकर्षो वा वर्णेऽर्थे न तु नामनि' इत्यादिनात्र ह्लादिना ष्णस्य ण्हादेशः॥६०॥

सुबोधिनी।

अत्र वा युक्तस्य विप्रकर्षः स्यात्। पूर्वस्वरवच्च स्वरः। कसणो कण्हो। 'कृष्णशब्दे विकर्षो वा वर्णेऽर्थे न तु नामनि'। तेन वासुदेवार्जुनादौ वाच्ये नित्यं कण्ह इति॥ ६०॥

# इत् श्रीह्रीक्लान्तक्लेशम्लान-स्वप्नस्पर्शादर्शहर्षार्हेषु॥ ६१॥

सञ्जीवनी।

पूर्वस्येत्यनुवर्तते 'ज्यायामीत्' इति यावत्। श्री इत्यादीनां युक्तस्य विकर्षः। पूर्वस्य तु इकारः। स्वप्नशब्दे अधो मनयामिति अन्यत्र सर्वत्र लवरामिति लोपः प्राप्तः। सिरी हिरी श्रीह्रीशब्दयोः। किलन्तो क्लान्तः। अदातो यथादिषु वेत्यत्वम्। इह क्रमप्राप्तस्य क्ल इत्यस्यैव विकर्षः। किलेसो मिलाणो क्लेशम्लानयोः। सिविणो स्वप्नः। इदीषदित्यादिना अत इत्वम्। सर्वत्र लवरामिति वलोपः। अथ कथं क्रमव्यतिक्रमे कारणाभावादिति क्रमप्राप्तं स्वप्न इत्यत्र स्वं परित्यज्य प्नस्य विकर्षः? अस्त्येतत् किन्तु स्व इत्यत्र विकर्षे प्रयोगादर्शनात्। वेत्यनुवर्तते। फरिसो। फंसो स्पर्शः। अत्रापि पूर्वन्यायः। स्पस्येति स्पस्य

फः। विकर्षादन्यत्र स्पर्श इत्यत्र सर्वत्र लवरामिति रलोपः। वक्रादिषु इति बिन्द्वागमः। दरिसणं दंसणं दर्शनम्। विकर्षादन्यत्र पूर्ववत् रेफलोपः बिन्द्वागमश्च। क्वचिन्नित्यम्। आअरिसो आदर्शः। कगचादिना दलोपः। र्षस्य क्वचिन्नित्यम्। हरिसो हर्षः। अमरिसो अमर्षः। शषां सः इति षस्य सः। वरिसो वर्षः। वरिसवरो वर्षवरः। क्वचिन्नैव। वासारत्तो वासवसअं वर्षारात्रवर्षशतयोः। आ समृद्ध्यादिषु वेति आदेरत आत्वम्। सर्वत्र लवरामिति रलोपः। र्हस्य क्वचिन्नित्यम्। अरिहो अर्हः। वरिहिणो बर्हिणः। गरिहा गर्हा। क्वचिन्नैव। दासारो दाशार्हः। 'रेफस्याधो हकारस्य लोपो भवति कुत्रचित्' इति हलोपः। 'प्लोषे प्लुष्टे भवेत् स्नायौ श्लोके विश्लेष इस्तथा'। पिलोसो प्लोषः। पिलुट्ठो प्लुष्टः। ष्टस्य ठ इति ठः। तस्य द्वित्वे वर्गे युज पूर्व इति टः। सिणाऊ स्नायुः। कगचादिना यलोपः। सुभिस्सुप्सु दीर्घः इति उकारस्य दीर्घः। सिलोओ श्लोकः। पूर्ववत् कलोपः। सर्वत्र विकर्षं कृत्वा पूर्वस्य इत्वम्। 'विकर्षोऽपि भवेद् वज्रे पूर्वस्येत्वं च पूर्ववत्'। वइरं। विकर्षे इत्वे कृते कगचादिना जलोपः। पक्षे वज्जं। सर्वत्र लवरामिति रलोपः। शेषादेशादिना द्वित्वम्।

'पूर्वस्य तस्य विकर्षो वा पूर्वस्येत्वं च वस्य मः' पु-
रिमं पुव्वं पूर्वम् । उद्भूतो मधुकादिषु इत्युक्तम् ॥६१॥

सुबोधिनी ।

एषु युक्तस्य विकर्षः स्यात् । विकृष्टस्य च पूर्ववर्णस्य च इकारः स्वरो भवति । तत्स्वरवदित्यस्यापवादः । सिरी हिरी किलंतो किलेसो सिणाणो सिविणो । अत्र स्व इत्यस्य विकर्षे प्रयोगादर्शनात् वेत्यनुवर्त्तमानबलात् व्यवस्थितविभाषा-श्रयेण क्रमप्राप्तं व्यतिक्रम्यापि प्रकृतस्य विकर्षः । लक्ष्याऽनु-साराच्च विकर्षो वर्त्तनीयः । फरिसो फंसो दरिसणं दंसणं । क्वचिन्नियम् । आअरिसो आदर्शः । र्षस्य क्वचिन्नित्यम् । हरिसो हर्षः । उक्करिसो उत्कर्षः । अमरिसो अमर्षः । पवरिसो प्रवर्षः । क्वचिन्नैव । वासारत्तं वाससअ । र्हस्य क्वचिन्नित्यम् । अरिहो अर्हः गरिहो गर्हः । वरिहिणो वर्हिणः । क्वचिन्नैव । दासारो दशार्हः । 'प्लोषे प्लुष्टे भवेत् स्नायौ श्लोके विश्लेष इस्तथा' । पिलोसो पिलुट्ठो सिणाऊ सिलोओ । 'वा विश्लेषो भवेद्वज्रे पूर्वस्य स्वर एव च' । वइरं वज्जं । 'पूर्वे तस्य विकर्षो वा पूर्वस्येत्वं च वस्य मः' पुरिमं पुव्वं ॥ ६१ ॥

# अः क्ष्माश्लाघयोः ॥६२॥

सञ्जीवनी ।

एतयोः शब्दयोर्युक्तस्य विकर्षः स्यात् । पूर्वस्य

चाकारः । अधो मनयामिति मलोपः । सर्वत्र लवरामिति ललोपः प्राप्तः । छमा खमा । क्ष्माशब्दे क्षकारमकारयोर्विकर्षो भवति । क्ष्माशब्दे क्षस्य छकारादेशो विधौ नानार्थत्वप्रसङ्गात् । सलाहा श्लाघा । 'वा विकर्षे विपर्यासो दीर्घेऽप्यत्वं च पूर्ववत्' । दिहरो दीहो । खघथादिना घस्य हः । विकर्षादन्यत्र सर्वत्र लवरामिति रलोपः ॥ ६२ ॥

सुबोधिनी ।

एतयोः युक्तस्य विकर्षः स्यात् पूर्वस्य च अः । खमा सलाहा । 'वा विकर्षो विपर्यासो दीर्घेऽप्यत्वं च पूर्ववत्' । दिहरो दीहो ॥ ६२ ॥

## स्नेहे वा ॥ ६३ ॥

सञ्जीवनी ।

अ इत्यनुवर्तते । स्नेहशब्दे युक्तस्य विकर्षो भवति पूर्वस्य चाकारः । सणेहो णेहो । विकर्षादन्यत्र उपरि लोप इत्यादिना सलोपः । ननु अधो मनयामिति परोक्तं नलोपमपि बाधित्वा ह्नस्नादिना स्न इत्यस्य प्रतिपदोक्तो ण्हादेशः प्राप्तः । तत् कथं उपरिलोप इत्यादिना सलोपः । उच्यते, लक्ष्यवशात् । यतो लक्ष्यं दृष्ट्वा लक्षणं प्रवर्तते । 'धात्वर्थस्य

प्रधानत्वात् स्निग्धेऽपि स्नेहवद्विधिः'। सिणिद्धो णिद्धो। उपरिलोप इत्यादिना सलोपः। तस्य द्वित्वे वर्गे युजः पूर्व इति दः ॥ ६३ ॥

सुबोधिनी।

अत्र युक्तस्य विप्रकर्षो वा स्यात्। इश्च पूर्वस्य। सिणेहो अत्र अत्वं णकारलोपो ण्हत्वं वा नाशंकनीयम्। प्रयोगाऽनुरोधात्। 'धात्वर्थस्य प्रधानत्वात्स्निग्धेऽपि स्नेहवद्विधिः'। सिणिद्धो णिद्धो ॥ ६३ ॥

# उः पद्मतन्वीसमेषु ॥ ६४ ॥

सञ्जीवनी।

पद्मतन्वीभ्यां समाः पद्मतन्वीसमाः। तेषु पद्मतन्वीसमेषु शब्देषु युक्तस्य विकर्षो भवति। पूर्वस्य उकारः। पद्मसमेषु–पउमं पद्मम्। घसुमरो घस्मरः। कसुमीरा कश्मीराः। 'एवं लिङ्गविपर्यासो ज्ञेयः शब्दान्तरेष्वपि' इति स्त्रीत्वात् आदीतौ बहुलमिति आप्रत्ययः। अन्त्यस्य हल इति सलोपः। प्राकृतलक्ष्यवशात् बहुत्वम्। वेसुमं वेश्म। सउमं सद्म। कगचादिना दलोपः। अन्त्यस्य हल इति नलोपः। नपुंसके सोर्बिन्दुरिति बिन्दुः। अउमरो अद्मरः। पूर्ववत् दलोपः।

पद्मघस्मरकश्मीरवेश्मसद्माद्मरादयः ।
समानाः पद्मशब्दस्य प्राकृतज्ञैः प्रदर्शिताः ॥

'द्वारे वा दवयोर्लोपस्तद्विकर्ष इति त्रिधा' । दारं चारं दुआरं । विकर्षपक्षे कगचादिना वलोपः । तन्वीसमेषु-तणुई तन्वी । लहुई लघ्वी । खघथादिना घस्य हः । असिसुई । अविद्यमानः शिशु यस्याः सा आशिश्वी । शषोः स इति शयोः सौ । मउई मृद्वी । ऋतोऽदित्यत्वम् । पडुई पट्वी । टो डः । बहुई बह्वी । गरुई गुर्वी । अन्मुकुटादिषु इत्युकारस्यात्वम् । पिहुई पृथ्वी । इदृष्यादिषु वेति ऋकारस्य इत्वम् । खघथादिना थस्य हः । कगचादिना वलोपः ।

तन्वी लघ्वी तथाशिश्वी मृद्वी पट्वी तथैव च ।
बह्वी गुर्वी च पृथ्वी च तन्वीतुल्याः प्रकीर्तिताः ६४॥

सुबोधिनी ।

पद्मसमेषु तन्वीतुल्येषु युक्तस्य विकर्षः पूर्वस्य च उः स्यात् ।

पद्मघस्मरकश्मीरवेश्मसद्माद्मरादयः ।
समानाः पद्मशब्दस्य प्राकृतज्ञैः प्रकीर्तिताः ॥

पउमं घसुमरो कसुमीरो वेसुमं सउमं अउमरो ।

तन्वी लघ्वी तथाशिश्वी मृद्वी पट्वी तथैव च
बह्वी गुर्वी च पृथ्वी च तन्वीतुल्याः स्युरीदृशाः ॥

तणुई लहुई आसिसुई पडुई बहुई गरुई पुहुवी ॥ ६४ ॥

# ज्यायामीत् ॥ ६५ ॥

सञ्जीवनी ।

ज्याशब्दे युक्तस्य विकर्षो भवति पूर्वस्य च ईकारः । जीआ ज्या । इत्यविकर्षेऽपि जीवाशब्दस्य सिद्ध्यति ।

इति वसन्तराजविरचितायां प्राकृतसंजीविन्यां युक्तवर्णविधिस्तृतीयः परिच्छेदः ।



सुबोधिनी ।

ज्याशब्दे विकर्षः पूर्वस्य च ईकारः स्यात् । जीआ इत्यविकर्षेऽपि जीवाशब्देऽपि सिद्ध्यति ॥ ६५ ॥

वृत्तौ प्राकृतसूत्राणां श्रीसदानन्दनिर्मितौ ।
परिच्छेदः सुबोधिन्यां तृतीयो युग्विधिर्गतः ॥



# चतुर्थः परिच्छेदः ।

## अथ संकीर्णविधिरुच्यते ।

## सन्धावचामज्लोपविशेषा बहुलम् ॥ १ ॥

सञ्जीवनी ।

अच् अज् इति प्रत्याहारयोर्ग्रहणम् । अचः स्वराः । अटोऽपि हयवराधिकाः स्वरा एव । अज्च लोपश्च अज्लोपौ । तयोर्विशेषा अज्लोपविशेषाः । सन्धौ कर्तव्ये अचां स्थाने अटो लोपस्य च विशेषाः भेदाः बहुलं प्रायो भवन्ति । अज्विशेषास्तावत् । क्वचिदेत्वविकल्पः—वासेसी वासइसी व्यासऋषिः । अधो मनयामिति यलोपः । इदृष्यादिषु वेति ऋकारस्य इत्वम् । राएसी राअइसी राजर्षिः । कण्णेरो कण्णऊरो कर्णपूरः । सर्वत्र लवरामिति रलोपः । शेषादेशादिना णस्य द्वित्वम् । अत्र तु अऊ इत्ये-

तयोः सन्धौ वा एत्वम्। क्वचिदात्वविकल्पः-चक्काओ चक्कवाओ चक्रवाकः। सर्वत्र लवरामिति रलोपः। शेषादेशादिना कस्य द्वित्वम्। कगचादिना प्रायोग्रहणाद् यत्र पक्षे वलोपः तत्र अआ इत्येतयोरात्वम्। कुंभारो कुंभआरो कुम्भकारः। अंधारो अन्धआरो अन्धकारः। कगचादिना कलोपः। क्वचिदकारस्य अपूर्वेण सह दीर्घत्वमादिलोपश्च—ममावि मम वि ममापि। अस्मदो मोममममहमज्झ ङसीति ममादेशः। केणवि केणावि केनापि। किमः क इति कः। टामोर्णः इति टाप्रत्ययस्य णः। ए सुप्यङिङसोरित्येत्वम्। पो वः इति वः। क्वचिद्दीर्घविकल्पः-वारीमई वारिमई। वारिणा निर्वृत्ता वारिमयी। वईमूलं वइमूलं वृत्तिमूलम्। ऋतोऽदित्यत्वम्। कगचादिना तलोपः। सन्धाविकारस्य वा दीर्घः। वेणूवणं वेणुवणं वेणुवनम्। क्वचिद्वा ह्रस्वः-जउणअडं जउणाअडं यमुनातटम्। आदेर्योज इति जः। यमुनायां मस्येति मलोपः। नो ण इति णः। टो ड इति डः। णइसोत्तो णईसोत्तो नदीस्रोतः। कगचादिना दलोपः। सर्वत्र लवरामिति रलोपः। नीडादिषु इति तस्य द्वित्वम्। अन्त्यस्य हल इति सलोपः। नसन्तप्रावृट्शरदः पुंसीति पुंस्त्वे अत ओत् सोरित्योत्वम्। क्वचिदपि

लोप इत्यलोपः । बहुमुहं वहूमुहं बधूमुखम् । खघथादिना खधयोर्हत्वम् । क्वचिद्वा ओकारस्य अत्वम्—सरुहं सरोरुहमेव । मणहरं मनोहरम् । सिरविअणा सिरोविअणा शिरोवेदना । शषोः स इति शस्य सः । एत इद्वा वेदनादेवरयोः इतीत्वम् । त्रिषु वा क्वचिन्नैवाकारस्य ओत्वम्–मणोरहो मणोहओ मनोरथमनोभवयोः । खघथादिना थभयोर्हः ।

अथ लोपविशेषाः—क्वचित्पूर्वपदान्तस्य वा अकारलोपः—राउलं राअउलं राजकुलम् । कगचादिना जकयोर्लोपः । पावडणं पाअवडणं पादपतनम् । पूर्ववल्लोपः । पो व इति वः । पदिपत्योर्डः इति डः । पावीढम् पाअवीढम् पादपीठम् । ठो ढ इति ढः । पूर्ववदन्यत् । क्वचित् हलपरयोरपि अचोर्नित्यमादिलोपः—तुम्हे त्थ । यूयमत्र । युस्मदः प्रथमाबहुवचने जसि यूयमिति पदस्य तुम्हे तुज्झे जसीति तुम्हे आदेशः । एत्थ । एतदः परस्य सप्तम्येकवचनस्य ङेः थ आदेशः । एत्थ इत्यत्र एकारलोपः । रइन्दो राजेन्द्रः । अन्त्यस्य हल इति नलोपः । तदवशिष्टस्य अकारस्य सन्धौ नित्यं लोपः । एवं गइन्दो गजेन्द्रः । मइन्दो मृगेन्द्रः । ऋतोऽदित्यत्वम् । पूर्ववदन्यत् । उविंदो उपेन्द्रः । इन्दोओ

इन्द्रगोपः। कगचादिना गलोपः। सन्धौ न्द इत्यस्य अलोपे कृते ओकारेण सस्वरत्वम्। पञ्चस्वपि द्रे रो वेति लोपः। दीवुज्जलो दीपोज्वलः। पो व इति वः। शेषादिना जस्य द्वित्वम्। सन्धावलोपः। उकारेण सस्वरत्वम्। मअरंदुज्जाणं मकरन्दोद्यानम्। कगचादिना कलोपः। त्यथ्यद्यां चछजा इति द्यस्य जः। जस्य शेषादेशादिना द्वित्वम्। सन्धिः पूर्ववत्। पमदुज्जाणं प्रमदोद्यानम्। अत्र सन्धावकारलोपः। महूसओ महोत्सवः। अत्र सन्धावाकारलोपः। क्वचिन्नित्यमिकारलोपः–तुह त्ति तव इति। युस्मदः षष्ठ्येकवचने ङस्प्रत्यये ङसि तुमो तुह तुज्झ तुम्ह इति तुह आदेशः। मह त्ति। मम इति। पूर्ववदस्मदः मो मम मह मज्झ ङसीति मह आदेशः। गओ त्ति गत इति। दइओ त्ति दयित इति। अत ओत् सोरित्योत्वम्। कगचादिना तलोपः। सर्वत्रैव इति–शब्दे नीडादिषु इति तकारस्य द्वित्वम्। क्वचित् यष्टिशब्दस्य वा ललोपः–चम्मट्ठी चम्मलट्ठी चर्मयष्टिः। सर्वत्र लवरामिति रलोपः। शेषादेशादिना मस्य द्वित्वम्। यष्टिशब्दे यष्ट्यां ल इति लः। ष्टस्य ठ इति ठः। तस्य द्वित्वे वर्गे युजः पूर्व इति टः। क्वचिन् न ललोपः। इह न भवति। असिलट्ठी असियष्टिः।

क्वचिन्न सन्धिः-मुहअंदो मुखचन्द्रः। परिअरो परिकरः। उवआरो उपकारः। पईरो प्रदीपः। दुराआरो दुराचारः। विआलो विकालः इत्यादयः। परोप्परं परस्परं। 'क्वचित् सस्य क्वचित् पस्य लोपः शब्दस्य इष्यते' इति सलोपः। शेषादेशादिना पस्य द्वित्वम्। सन्धावकारस्योत्वम्। क्वचिद् विसर्गेण सह पूर्वस्या-कारस्यैत्वम्। अन्तेउरं अन्तःपुरं। कगचादिना तलोपः। तेरह त्रयोदश। तेवीसा त्रयोविंशतिः। मांसादिषु वेति बिन्दुलोपः। ईद्भूतावित्यादिना ईत्वम्। अत्र तिकारस्य स्त्रियामादित्यात्वं वक्तव्यम्। तेत्तीसा त्रयस्त्रिंशत्। पूर्ववत् बिन्दुलोपः। अन्त्यस्य हल इत्यादिना सलोपः। स्त्रियामादिति तकारस्यात्वम्। 'लोपः साचो यकारस्य क्वचिन्नित्यं क्वचिन्न वा' इति त्रिंशत्यस्य लोपः। सन्धावचामित्यादिना एत्वम्। क्वचिदेकस्यापि पदस्य विशेषाः-पुणो पुणा पुण पुनः। पक्षे विसर्जनीयेन सह अकारस्य ओत्वम्। पक्षे आत्वम्। पक्षे विसर्जनीयलोपः। एवं बहुलग्रहणात् सन्धौ प्रकारान्तराण्यपि महाकवि-प्रयोगानुसारेणावगन्तव्यानि। तथाचोक्तम्।

क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः
क्वचिद् विभाषा क्वचिदन्यदेव।

विधेर्विधानं बहुधा समीक्ष्य
चतुर्विधं बाहुलकं वदन्ति ॥ १ ॥

सुबोधिनी।

अट् च लोपश्च अड्लोपौ। तयोर्विशेषाः अड्लोपविशेषाः। अच्अट्प्रत्याहारौ गृह्येते। छायावाहीनि खलु प्राकृतसूत्राणि पाणिनीयानाम्। सन्धौ कर्त्तव्ये अचां स्वराणां स्थाने अटां हयवराधिकानां लोपस्य च विशेषाः प्रभेदा बहुलं प्रायो भवन्ति। तत्र विशेषास्तावत्। क्वचिदेत्त्वविकल्पः—वासेसी वास-इसी व्यासऋषिः। राएसी राअइसी राजऋषिः। अत्र इकारे। कण्णेरो कण्णऊरो कर्णपूरः। अत्र ऊकारे। क्वचिदात्त्वविकल्पः-चक्काओ चक्कवाओ चक्रवाकः। अत्र वलोपपक्षे अआ इत्येत-योरात्वम्। कुंभारो कुंभआरो कुम्भकारः। क्वचिदकारात्परस्यापि पूर्वेण सह दीर्घत्वं पूर्वलोपश्च वा। ममावि ममवि ममापि। केणावि केणवि केनापि। क्वचिद्दीर्घविकल्पः—वारीमई वारिमई वारिणा निर्वृत्ता वारिमयी। वईमूलं वइमूलं वृत्तिमूलम्। वेणूवणं वेणुवणं वेणुवनम्। क्वचिद् ह्रस्वः—जउणअडं जउणाअडं यमुनातटम्। णइसोत्तो णईसोत्तो नदीस्रोतः। वहुमुहं वहूमुहं वधूमुखम्। क्वचि-दोकारस्य वा अत्वम्—सररुहं सरोरुहं मणहरं मनोहरं सिरविअणा सिरोविअणा शिरोवेदना। क्वचिन्नैव। मणोरहो मनोरथः।

अथ लोपविशेषाः। क्वचित्पूर्ववदक्षरस्य वा अलोपः।

राउलं राअउलं राजकुलं पावडणं पाअवडणं पादपतनम् । पापीढं पाअपीढं पादपीठम् । क्वचिद्धलपरयोरप्यतो निसमादिलोपः । तंपि तुम्पि त्वमपि । क्वचिद्वा एकारलोपः–तुम्हे त्थ तुम्हे एत्थ यूयमत्र । सिअंचलं सिचयाञ्चलं पेडन्तो पर्यन्तः । हत्थन्तरं हस्तान्तरम् । करग्गं कराग्रम् । रइन्दो राजेन्द्रः । गइन्दो गजेन्द्रः । मइन्दो मृगेन्द्रः । उविन्दो उपेन्द्रः । इंदोवओ इन्द्रगोपकः । दीवुज्जलो दीपोज्ज्वलः । मअरंदुज्जाणं मकरन्दोद्यानं पमदुज्जाणं प्रमदोद्यानम् । महूसवो महोत्सवः । वसंतूसवो वसन्तोत्सवः । क्वचिन्निसमिकारलोपः । तुमं त्ति तव इति । मह त्ति मम इति । गओ त्ति गतइति । दइओ त्ति दयित इति । लोमावल्लेकणालम् । रोमावलिरेवैकनालं यस्येति रोमावल्येकनालम् । क्वचिद् यष्टिशब्दस्य वा ललोपः । चम्मट्ठी चम्मलट्ठी चर्मयष्टिः । इह न भवति । असिलट्ठी असियष्टिः । क्वचिन्न संधिः–मुहअंदो मुखचन्द्रः । परिअरो परिकरः उवआरो उपकारः पईरो प्रदीपः । दुराआरो दुराचारः । विआलो विकाल इति । क्वचिद्विसर्गेण सह पूर्वस्य अत एत्वम् । अन्तेउरं अन्तःपुरं । तेरह त्रयोदश । तेवीसा त्रयोविंशतिः । तेत्तीसा त्रयस्त्रिंशत् । क्वचिदेकस्यापि परस्याद्लोपविशेषः । पुणो अत्र विसर्जनीयेन सहाकारस्यौत्वम् । पुणा अत्रात्वं । पुण । अत्र विसर्गलोपः पुनः । एवं बहुलग्रहणात् सन्धौ प्रकारान्तराण्यपि महाकविप्रयोगाऽनुसारेणावसेयानि ॥ १ ॥

# उदुम्बरे दोर्वा लोपः ॥ २ ॥

सञ्जीवनी ।

उदुम्बरशब्दे दोर्दुकारस्य साचकस्य वा लोपो भवति । कगचादिना दमात्रस्य प्राप्तः । इत आरभ्य सूत्रचतुष्टये साचो हलो लोपार्थः । उम्बरं उउम्बरं उदुम्बरमेव ॥ २ ॥

सुबोधिनी ।

उदुम्बरशब्दे दोर्दकारस्य साचकस्य वा लोपः स्यात् । उउम्बरं उम्बरं उदुम्बरं ॥ २ ॥

# कालायसे यस्य ॥ ३ ॥

सञ्जीवनी ।

वेत्यनुवर्तते अन्त्यस्य हल इति यावत् । कालायसशब्दे साचो यकारस्य लोपः स्याद्वा । पूर्ववत्-प्राप्तिः । कालासं कालाअसं । साचो यस्य लोपादन्यत्र यमात्रस्य कगचादिना लोपः । 'लोपः साचो यकारस्य क्वचिन्नित्यं क्वचिन्नवा' नित्यं तावदु वक्तव्यमित्यात्वम् । तेत्तीसा त्रयस्त्रिंशत् । पूर्ववदु विन्दुलोप इत्वं च । अन्त्यस्य हल इति सुलोपः । स्त्रियामादिति तका-

रस्यात्वम्। त्रिष्वपि साचो यकारस्य लोपे सन्धाव-चामित्यादिना सन्धौ विसर्गेण सह पूर्वाकारस्योत्वम्। सहिओ सहृदयः। इदृष्यादिषु वेति ऋकारस्य इत्वम्। कगचादिना दलोपः। अत ओत् सोरित्योत्वम्। क्वचि-दपि लोप इति दलोपावशिष्टस्याकारस्य लोपः। पक्षे सहिअओ। किसलं किसलअं। ओसो ओसाओ अवश्यायः। ओदवापयोरित्योत्वम्। अधो मनया-मिति यलोपे कृते सेवादिषु वेति शेषस्य द्वित्वाभावः। कइवं कइवअं कतिपयम्। कगचादिना तलोपः। पो व इति वः। सुहाइ सुहाअइ सुखायते। धूमाइ धूमाअइ धूमायते। ततिपोरिदेवताविति तस्य इत्वम् ॥ ३ ॥

सुबोधनी।

अत्र साचो यकारस्य वा लोपः स्यात्। कालासं काला-असं। 'लोपः साचो यकारस्य क्वचिन्नित्यं क्वचिन्न वा'। तेत्रीसा तेत्तीसा। इह तु वा। सहिओ सहिअओ सहृदयः। किसलं किसलअं किसलयम्। ओसो ओसाओ अवश्यायः। कइयं कइवअं कतिपयम्। सुहाइ सुहाअइ सुखायते। धूमाइ धूमाअइ धूमायते ॥ ३ ॥

## भाजने जस्य ॥ ४ ॥

सञ्जीवनी ।

भाजनशब्दे साचो जस्य लोपो भवति वा । भाणं भाअणं भाजनम् ॥ ४ ॥

सुबोधिनी ।

अत्र जस्य साच्कस्य लोपो वा । भाणं भाअणं ॥ ४ ॥

# यावदादिषु वस्य ॥ ५ ॥

सञ्जीवनी ।

यावदादिषु शब्देषु साचो वस्य लोपो भवति । जा जाव यावत् । अन्त्यस्य हल इति तलोपः । ता ताव तावत् । जीअं जीविअं जीवितम् । देउलं देवउलं देवकुलम् । कगचादिना कलोपः । आट्टन्तं आवट्टन्तं आवर्तमानम् । साचो वस्य लोपपक्षे अदातो यथादिषु वेत्यत्वम् । र्तस्य ट इति टः । शेषादेशादिना तस्य द्वित्वम् । न्तमाण इत्यादिना न्तआदेशः । सन्धावचामित्यादिना अलोपः । पारओ पाआरओ प्रावारकः । सर्वत्रेति रलोपः । कगचेति कलोपः । अत ओत् सोरित्योत्वम् क्वचिदपि लोप इत्यलोपः । एमेअ एअमेअ एवमेव । साचो वस्य लोपादन्यत्र कगचादिना वलोपः । खंधारो खंधआरो स्कन्धावारः ।

ष्कस्कक्षां ख इति खः ।

यावत्तावज्जीवितदेवकुलावर्तमानशब्दा ये ।

प्रावारकैवमेवस्कन्धावारा यावदाद्याः स्युः ॥

चक्काओ चक्कवाओ चक्रवाकः । चक्रवाक इत्याद्यपि यादवादिषूदाहरन्ति । साचोवस्य लोपपक्षे ककारेऽकारस्य दीर्घत्वमपि चिन्त्यम् ॥ ५ ॥

सुबोधिनी ।

एषु साचो वस्य लोप स्याद् वा ।

यावत्तावज्जीवितदेवकुलावर्तशब्दा ये ।

प्रावरक एवमेव स्कंधावारो यावदादयो ह्येवम् ।

जा जाव । ता ताव । जीअ जीविअं । देउलं देवउलं । अट्टं आअट्टं । पारओ पाअ रओ । एमेअ एअमेव । खंधारो खंधाआरो । केचित्तु चक्काओ चक्कवाओ चक्रवाक इत्याद्यपि यावदादिषूदाहरन्ति ॥ ५ ॥

## अन्त्यस्य हलः ॥ ६ ॥

सञ्जीवनी ।

अन्ते भवः अन्त्यः । प्रतिपदिकानामन्त्यस्य तेभ्यः परस्य सुप्रत्ययसम्बन्धिनो हलो व्यञ्जनस्य वा लोपः स्यात् । कम्मो चम्मो कर्मचर्मणोः । जसो यशः ।

आदेर्यो ज इति जः । णमो नमः । सर्वत्र अन्त्यस्य हल इति लोपे कृते नसन्तेत्यादिना पुंस्त्वे अत ओत् सोरित्योत्वम् । एसो एषः । तदेतदोः स इति तस्य सः । दलोपः । एतदः सोरोत्वं वा इत्योत्वम् । धणू धनुः । अन्त्यस्य हलो लोपः । नसन्तेत्यादिना पुंस्त्वे सुभिस्सुप्सु दीर्घ इतिदीर्घः । रमा रमणी रमारमण्योः। अत्र सुप्रत्ययसम्बन्धिनो हलो लोपः । पाणी धेणू पाणिधेनुशब्दयोः । सुभिस्सुप्सु दीर्घ इति दीर्घः । 'क्वापि लोपानुबन्धस्य बुधा वाञ्छन्त्यदन्ताम्' सक्खिणो साक्षी । अदातो यथादिषु वेत्यत्वम् । ष्कस्कक्षां ख इति क्षस्य खः । पूर्वस्य वर्गे युजः पूर्व इति कः । नकारस्य अदन्तत्वेन अत ओत् सोरित्योत्वम् । क्वचिदपि लोपः इत्यलोपः । पच्चे सक्खी । अत्रान्त्यस्य हल इति लोपे कृते सुभिस्सुप्सु दीर्घ इति दीर्घः । अन्त्यस्य हल इति सलोपः ॥ ६ ॥

सुबोधिनी ।

प्रातिपदिकप्रविष्टस्य शेषव्यञ्जनस्य तदुत्तरवर्तिनः सुप्प्रत्ययसम्बन्धिनो हलो व्यञ्जनस्य लोपः । जसो यशः । 'क्वापि लोपानुबन्धस्य बुधा वाछन्त्यदन्तताम्' । सक्खिणो सक्खी साक्षी ॥ ६ ॥

# स्त्रियामात् ॥ ७ ॥

सञ्जीवनी ।

अन्त्यस्य हल इत्यनुवर्तते दिक्प्रावृषोरिति यावत् । स्त्रियां वर्तमानस्य प्रातिपदिकस्य योऽन्त्यो हल् तस्याकारः स्यात् । पूर्वेण लोपः प्राप्तः । एसा सम्पआ एषा सम्पत् । एआवआ एतावती । इअं सारिआ इयं सरित् । इअं वाआ इयं वाक् ॥ ७ ॥

सुबोधिनी ।

प्रातिपदिकस्यान्त्यस्य हल आत्वं स्यात् । एसा सरिआ एषा सरित् ॥ ७ ॥

# न विद्युति ॥ ८ ॥

सञ्जीवनी ।

विद्युच्छब्दे अन्त्यस्य हल आकारादेशो न भवति । पूर्वेण प्राप्तः । विज्जू । त्यथ्यद्यां चछजा इति जः । जस्य शेषादेशादिना द्वित्वम् । अन्त्यस्य हलो लोपः । सुभिस्सुप्सु दीर्घ इति दीर्घः । यावत् सम्भवस्तावद्विधिरिति वचनात् अन्त्यस्य हल इति सुलोपः ॥ ८ ॥

सुबोधिनी ।

विद्युच्छब्दे तन्न स्यात् । विज्जू ॥ ८ ॥

## रो रा ॥ ९ ॥

सञ्जीवनी ।

स्त्रियामित्यनुर्वतते । र इति षष्ठ्यन्तम् । स्त्रियां वर्त्तमानस्य प्रातिपदिकस्य योऽन्त्यो रः तस्य रादेशो भवति । आत्वमेव प्राप्तमुत्तरत्रापि । गिरा गीः । पुरा पूः । धुरा धूः । अन्त्यस्य हल इति सुलोपः । 'बहिःशब्दे हलोऽन्यस्य रेफादेशो विभाषया' । बाहिरं बहिः । आ समृद्ध्यादिषु वेति आदेरात्वम् । नपुंसके सोर्बिन्दुरिति बिन्दुः ॥ ९ ॥

सुबोधिनी ।

स्त्रियां वर्त्तमानस्यान्त्यरेफस्य रात्वं स्यात् । गिरा गीः। 'बहिः शब्दे हलोऽन्त्यस्य रेफादेशो विभाषया' । बाहिरं बहिः ॥ ९ ॥

## छुधो हः ॥ १० ॥

सञ्जीवनी ।

क्षुधा शब्दस्य ह इत्यादेशः स्यात् । वर्णान्त-

रस्य विधिरिति वचनात् अन्त्यस्य भवति । छुहा क्षुधा ॥ १० ॥

सुबोधिनी ।

अन्त्यस्य हः स्यात् । छुहा ॥ १० ॥

## शरदोऽत् ॥ ११ ॥

सञ्जीवनी ।

शरच्छब्दे अन्त्यस्य हलोऽकारादेशः स्यात् । लोपः प्राप्तः । सरओ शरत् । नसन्तप्रावृट्शरदः पुंसीति पुंस्त्वे अत ओत् सोरित्योत्वम् । क्वचिदपि लोप इत्यलोपः । नन्वकारादेशमपि बाधित्वा यदि लोपः कर्तव्यः । तर्हि प्रथमं हलो लोपेन किमपराद्धम् । न वा अत ओत् सोरिति वा । प्रवृत्त्यर्थोऽयमादेशः । यतो लोपे कृते रेफेऽकारोऽस्त्येव । अस्त्येतत् । किन्तु क्वचिदपि लोप इत्यकारलोपः क्रियमाणाकारादेशमन्तरेण रेफाकारस्यैव स्यात् । ततश्च सरो इत्यनिष्टं सिद्ध्येत् ॥ ११ ॥

सुबोधिनी ।

अस्यान्त्यस्य अः स्यात् । सरओ । ननु सूत्रान्तरादेवेदं रूपं

सिध्यतीदं सूत्रमनर्थम् ? न । क्वचिदपि लोप इत्यलोपे क्रियमाणे सरो इत्यापत्तेः ॥ ११ ॥

# दिक्प्रावृषोः सः ॥ १२ ॥

## सञ्जीवनी ।

एतयोः शब्दयोरन्त्यहलः सादेशः स्यात्। दिक्शब्दस्य स्त्रियामात् इत्यात्वं प्राप्तम् । प्रावृट्शब्दे अन्त्यस्य हल इति लोपः प्राप्तः। दिसा दिक्। आदीतौ बहुलमिति आप्रत्ययः । सन्धावचामित्यादिना अआ इत्येतयोरात्वम् । पाउसो प्रावृट् । कगचादिना वलोपः । उदृष्यादिषु इति ऋकारस्योत्वम् । नमन्तप्रावृट्शरदः पुंसीति पुंस्त्वे अत ओत् सोरित्योत्वम् । क्वचिदपिलोप इत्यलोपः । 'आयुरप्सरसोः सो वा हलोऽन्त्यस्य विधीयते'। दिहाउसो दिहाऊ दीर्घायुः । सर्वत्र लवरामिति रलोपः । खघथादिना घस्य हः । कगचादिना यलोपः। सकारादेशादन्यत्र अन्त्यस्य हल इति सुलोपः। सुभिस्सुप्सु दीर्घ इति दीर्घः । पुनरपि यावत् ससमस्तविधिरिति वचनात अन्त्यस्य हल इति सलोपः । अच्छरसा अप्सराः । श्चत्सप्सां छ इति छः । छस्य द्वित्वे वर्गे युजः पूर्व इति चः । सादेशे कृते आदीतौ

बहुलमिति आप्रत्ययः । स्त्रन्धावचामित्यादिना अआ इत्येतयोरात्वम् । पक्षे अच्छरा । अन्त्यस्य हल इति सुलोपः । स्त्रियामात् इत्यात्वम् । पूर्ववदन्यत् ॥ १२ ॥

सुबोधिनी ।

अनयोरन्त्यस्य सः स्यात् । दिसा पाउसो । 'आयुरप्सरसोः सो वा हलोऽन्त्यस्य विधीयते' । दिहाउसो दिहाऊ दीर्घायुः । अच्छरसा अच्छरा अप्सराः ॥ १२ ॥

# मो बिन्दुरचि वाऽलोपश्च ॥१३॥

सञ्जीवनी ।

अत्रैव सूत्रे त्रीणि सूत्राणि ।

मो बिन्दुरित्येकम् । म इत्यक्षरं षष्ठ्यन्तम् । अन्त्यस्य हलो मस्य बिन्दुरादेशः । किं एदं । किमेतदोः । कहं कथम् । खघथादिना थस्य हः । तुण्हिं तूष्णीम् । उदूतो मधुकादिषु इत्युत्वम् । इदीतः पानीयादिषु इति इत्वम् । ह्नष्णस्नश्नां ण्हः इति ण्हः ।

अचि वेति द्वितीयं सूत्रम् । मो बिन्दुरित्यनुवर्तते । अचि परे अन्त्यस्य मो बिन्दुर्वा स्यात् । पडमवहरइ पडं अवहरइ पटमपहराति । पटशब्दे द्वितीयैकवचने अमि अतोऽमः इत्यकार लोपः । टो डः इति टस्य डः ।

रसमुवणेइ रसं उवणेइ रसमुपनयति । किमिणमो किं इणमो किमिदम् । इदं शब्दस्य स्वमोरिदमिणमो इति इणमो आदेशः ।

अलोपश्चेति तृतीयं सूत्रम् । म इत्यनुवर्तते । नलोपोऽलोपः । तस्य च मस्य लोपो न भवति । अचि वेत्यनेन यत्र पक्षे बिन्दुरादेशस्तस्मादन्यत्र अन्त्यस्य हल इति मस्य लोपः प्राप्तः । स न भवतीत्यर्थः । तत्र सन्धावचामित्यादिना सस्वरत्वमेव जायते । उक्तान्युदाहरणानि । 'अनुस्वारस्य नादेशो वा स्यादचि परे स्थिते' । फलमेरिसं फलं एरिसं फलमीदृशम् । फलशब्दे सुप्रत्ययस्य नपुंसके सोर्बिन्दुरिति बिन्दुः । ईदृशशब्दे एन्नीडादिना ईकारस्य एत्वम् । युक्तस्यापि रिः इति दृकारस्य रिः। अहमेसो अहं एसो अहमेषः। अस्मदः सुप्रत्यये अहमिति पदस्य अस्मदो अहं माविति अहं आदेशः। एतद् शब्दे तदेतदोः स इति सः। अन्त्यस्य हल इति दलोपः। एतदः सोरोत्वं वा इति ओत्वम्। सच्चमिणं सच्च इणं सत्यमिदम्। सत्यशब्दे त्यथ्यद्यां चछजा इति चः । चस्य शेषादेशादिना द्वित्वम् । नपुंसके सोर्बिन्दुः इति बिन्दुः । इदं शब्दे स्वमोरिमामिणमो इति इणं आदेशः ॥ १३ ॥

सुबोधिनी ।

एकत्र त्रीणि सूत्राणि । अन्त्यस्य मस्य बिन्दुः स्यात् । किं । किमो रूपमिदम् ।

अचि परे अन्त्यस्य मोबिन्दुर्वा स्यात् । पडमवहरइ पडं अवहरइ पटमपहरति ।

अन्त्यस्य मकारस्य लोपश्च न स्यात् । उक्तमुदाहरणम् ।

'अनुस्वारस्य मादेशो वा स्यादचि परे स्थिते' । सच्चमिणं सच्चं इणं सत्यमिदम् । अन्त्यस्येति निवृत्तम् ॥ १३ ॥

# नङोर्हलि ॥ १४ ॥

सञ्जीवनी ।

बिन्दुरित्यनुवर्तते । यमि तद्वर्गान्तं यावत् । हलि व्यञ्जने परे नकारङकारयोः बिन्दुरादिश्यते । संझा बंझा सन्ध्यावन्ध्ययोः । ध्यह्ययोर्झ इति झः । पंती पङ्क्तिः । उपरिलोप इत्यनेन कलोपः । सुभिस्सुप्सु दीर्घ इति दीर्घः । अन्त्यस्य हल इति सुलोपः ॥ १४ ॥

सुबोधिनी ।

नकारङकारयोर्हलि परे बिन्दुः स्यात् । संझा सन्ध्या । पंती पङ्क्तिः ॥ १४ ॥

# वक्रादिषु ॥ १५ ॥

सञ्जीवनी।

वक्रादिशब्देषु बिन्दुरागमः स्यात्। वंको वक्रः। तंसं त्र्यस्रम्। अधो मनयामिति यलोपः। सर्वत्र लवरामिति रलोपः। वअंसा वयस्या। आदीतौ बहुलमिति आप्रत्ययः। सन्धावचामित्यकारलोपः। अंसुं अस्रु। नपुंसके सोर्बिन्दुरिति बिन्दुः। सोरभं सौरभम्। 'प्रायः शब्दानुवृत्त्यापि हत्वाभावः क्वचिद् भवेत्'। औत ओदित्योत्वम्। माणंसिणी मनस्विनी आ समृद्ध्यादिषु वेति आदेरत आत्वम्। फंसो स्पर्शः। स्पस्य फ इति फः। णिअंसणं निवसनम् सुंकं शुल्कम्। सर्वत्र लवरामिति ललोपः।

'वक्रत्र्यस्रवयस्याश्रुसौरभाणि मनस्विनी।
स्पर्शो निवसनं शुल्कं वक्रादयः स्युरीदृशाः ॥ १५ ॥

सुबोधिनी।

वक्रादिशब्दे हलि परे बिन्दुरागमः स्यात् यथादर्शनम्।

वक्रत्र्यस्रवयस्याश्रुसौरभाणि मनस्विनी।
स्पर्शो निवसनं शुल्कं स्युर्वक्रादय ईदृशाः ॥

वंको तंसं वअंसो अंसू सोरभं मणिंसिणी फंसो णिअंसणं सुंकं ॥ १५ ॥

# मांसादिषु ॥ १६ ॥

सञ्जीवनी ।

उदुम्बरे दोर्वा लोप इत्यतो लोप इत्यनुवर्तते । बिन्दु-रित्यनुवर्तमानमर्थवशात् विभक्तिविपरिणाम इति षष्ठयन्तो जायते । मांसशब्देन सदृशा मांसादयः । तेन मांसशब्दे बिन्दुलोपः । मासं मंसं अन्यत्र अदातो यथादिषु वेत्यत्वम् । नपुंसके सोर्बिन्दुरिति बिन्दुः । कह कहं कथम् । अन्त्यस्य हल इति मलोपः । मो बिन्दुरिति बिन्दुः । तस्यानेन वा लोपः ।

मांसादिषु कथं नूनमिदानीं सम्मुखं तथा ।
संस्कारे संस्कृतायां तु नित्यं बिन्दुर्विलुप्यते ॥

सक्कारो संस्कारः । सक्कओ संस्कृतम् । उपरि लोप इत्यादिना लोपः । शेषादेशादिना द्वित्वम् ॥१६॥

सुबोधिनी ।

मण्डूकप्लुतिन्यायेन लोप इत्यनुवर्त्तते । बिन्दुरित्यनुवर्त्तमा-नमर्थवशाद्विपारिणतविभक्तिः । मांसादिशब्दे बिन्दुलोपो वा स्यात् । 'मांमादिकं कथं नूनमिदानीं संमुखं तथा'। मासं मंसं । काह कहं । णूण णूणं । दाणि दाणीं समुहो संमुहो । 'संस्कार-संस्कृतादौ तु नित्यं विन्दुर्विलुप्यते' । सक्कारो सक्कअं ॥१६॥

# कपि तद्वर्ग्यान्तः॥ १७॥

सञ्जीवनी।

वेत्यनुवर्तते। बिन्दुरित्येव। कपिति प्रत्याहारः कवगादारभ्य पवर्गं व्याप्य। तस्य वर्गः तद्वर्ग्यः। अन्ते भवः अन्त्यः तद्वर्ग्यस्यान्त्यः तद्वर्ग्यान्त्यः। तदिति परामृश्यते। कपि परे बिन्दोस्तद्वर्गान्त्य आदेशः स्याद् वा। यस्य वर्गस्य यः सम्बन्धी अन्तगतो वर्णः स बिन्दोर्वा भवतीत्यर्थः। ङस्तावत्-सङ्करो संकरो सङ्गमो संगमो संकरसंगमयोः। ञकारे-धणञ्जओ धणंजओ धनञ्जयः। णकारे-सण्ठिओ संठिओ संस्थितः। नकारे-चिरन्तणं चिरंतणं। मकारे-किम्पि किंपि। अत्र 'नपुंसके स्वमोः कत्वं न किमः स्यात्तु लुप्तयोः' इति सुलोपे किमश्च किमः क इति कस्याभावः। किम् अपि इत्येतयोः सन्धावचामित्यादिना अलोपः। मो बिन्दुरिति बिन्दुः। तत्स्थाने तद्वर्ग्यान्त्यो मकारः। कपीति किम्? अहं राआ। अहमिति अस्मदः सुप्रत्यये पदस्यास्मदोऽहम्मित्यादिना अहं आदेशः। राआ इति राजन्शब्दे कगचादिना जलोपः अन्त्यस्य हल इति नसकारयोर्लोपः। राज इति जलोपावशिष्टस्य अकारस्यात्वम्॥ १७॥

सुबोधनी ।

कप इति प्रत्याहारः। तेन कवर्गादारभ्य पवर्गं व्याप्य गृह्यते। कादिपञ्चवर्गीयाक्षरे परे यो वर्णः परस्तद्वर्गीयः पञ्चमवर्णो बिंदोर्वा भवति। सङ्करो संकरो शङ्करः। धणञ्जओ धणंजओ धनञ्जयः। सण्ठिओ संठिओ संस्थितः। चिरन्तणं चिरंतणं चिरन्तनम्। किम्पि किंपि किमपि। एवं वर्णान्तरे स्वयमूह्यम्। कपीति किम्? अहं राआ ॥ १७ ॥

## नसन्तप्रावृट्शरदः पुंसि ॥ १८ ॥

सञ्जीवनी ।

नकारेऽकार उच्चारणार्थः। नसौ अन्ते ययोस्तौ नसन्तौ ततो द्वन्द्वः। नकारान्तः सकारान्तः शब्दः प्रावृष् शरद् इत्येतौ च पुल्लिङ्गे भवन्ति। लिङ्गान्तरस्य बाधः। चम्मो वम्मो चर्म्मवर्मणी। सर्वत्र लवरामीति रलोपः। शेषादेशादिना मस्य द्वित्वम्। अन्त्यस्य हल इति नलोपः। सर्वत्र नपुंसकत्वात् नपुंसके सोर्बिन्दुरिति बिन्दुः प्राप्तः। तं बाधित्वा पुंस्त्वे अत ओत् सोरित्योत्वम्। 'नान्तं नपुंसके विद्धि पुल्लिङ्गेऽपि प्रशस्यते'। चम्मं वम्मं चर्म वर्म। पेम्मं प्रेम। नीडादिषु मस्य द्वित्वम्। तमो तमः महो महः। पाउसो प्रावृट्। उदृत्वादिषु इति ऋकारस्योत्वम्। दिक्प्रावृषोः स

इति अन्त्यस्य हलः सस्वरत्वम् । अत्र स्त्रीत्वात् आदीतौ बहुलमिति आप्रत्ययः प्राप्तः । तं बाधित्वा पुंस्त्वात् अत ओत् सोरित्योत्वम् । सरओ शरत् । शरदोऽदिति दकारस्यात्वम् । पूर्ववदन्यत् ॥ १८ ॥

सुबोधिनी ।

नकारे अकार उच्चारणाऽर्थः । नकारः सकारान्तः प्रावृट्-शब्दः शरच्छब्दः पुंसि पुल्लिङ्गे भवति । वम्मो वर्म । 'नान्तं नपुंसके विद्धि पुल्लिङ्गेपि प्रशस्यते' । चम्मो चर्म । तमो तमः । पाउसो सरओ ॥ १८ ॥

# न शिरोनभसी ॥ १९ ॥

सञ्जीवनी ।

पुंसीत्यनुवर्तते । शिरस् नभस् इत्येतौ पुंसि न भवतः । सान्तत्वात् पूर्वेण प्राप्तौ । सिरं । अन्त्यस्य हल इति सलोपः । नपुंसके सोर्बिन्दुरिति बिन्दुः । णहं । खघथादिना भस्य हः । पूर्ववदन्यत् ॥ १९ ॥

सुबोधनी ।

एतौ पुंसि न स्तः । सिरं णहं ॥ १९ ॥

# पृष्ठाक्षिप्रश्नाः स्त्रियां वा ॥ २० ॥

## सञ्जीवनी।

एते शब्दाः स्त्रीलिङ्गे वा भवन्ति। पृष्ठ अक्षि इत्येतयोः प्रसिद्धं नपुंसकं विकल्प्यते। प्रश्नशब्दस्य तु पुंस्त्वम्। पट्ठी। ऋतोऽदित्यत्वम्। उपरि लोप इत्यादिना षलोपः। वर्गे युजः पूर्व इति ठस्य द्वित्वे टः। अत्र स्त्रीत्वात् आदीतौ बहुलमिति ईप्रत्ययः। सन्धावचामित्यादिना अकारलोपः। अच्छी। अक्ष्यादिषु छ इति छः। अत्र स्त्रीत्वात् सुभिस्सुप्सु दीर्घ इति दीर्घः। अच्छि। नपुंसके सोर्बिन्दुरिति बिन्दुः। पण्हा प्रश्नः। ह्वश्नादिना श्नस्य ण्हः। अत्र स्त्रीत्वात् आदीतौ बहुलमिति आप्रत्ययः। सन्धावचामित्यादिना अ आ इत्येतयोरात्वम्। अन्त्यस्य हल इति सुलोपः। पक्षे पण्हो। पुंस्त्वात् अत ओत् सोरित्योत्वम्। 'एवं लिङ्गविपर्यासो ज्ञेयः शब्दान्तरेष्वपि' गुणाइं बिन्दूइं गुणाः बिन्दवः। पुंस्त्वेऽपि यदा नपुंसकत्वं तदा इ जश्शसो दीर्घश्चेति जस इ आदेशः। पूर्वस्य च दीर्घः। पक्षे गुणा बिन्दू। जश्शसोर्लोप इति जसो लोपः। रस्सीओ रश्मयः। अधोमनयामिति मलोपः। शषोः स इति शस्य सः। तस्य

शेषादेशादिना द्वित्वम् । अत्र पुंस्त्वेऽपि यदा स्त्रीलिङ्गता तदा जसो वेति जस ओत्वम् । जश्शस्ङस्यांसु दीर्घ इति दीर्घः ॥ २० ॥

सुबोधिनी ।

एते स्त्रियां वा स्युः । पट्ठी पट्ठं । अच्छी अच्छि । पण्हा पण्हो । 'एवं लिङ्गविपर्यासो ज्ञेयः शब्दान्तरेष्वपि' गुणाइं गुणाः । विन्दूइं विन्दवः । लोअणा लोचनो । रस्सीओ रश्मयः ॥ २० ॥

# ओदवापयोः ॥ २१ ॥

सञ्जीवनी ।

वेत्यनुवर्तते । अव अप इत्येतयोः ओकारादेशो भवति वा । ओवासो अवकाशः । काशेर्वासः इति वासादेशः । पक्षे अवआसो । ओवाहिअं अवगाढम् । 'गाहू' विलोडने इत्यस्यावपूर्वस्य निष्ठायां तः । अव गाहे इति वाहादेशः । क्ते परे वाह इत्यकारस्य इत्वम् । कगचादिना तलोपः । पक्षे अववाहिअम् । ओसिअं अवसिअं अपसृतम् । ओत्वादन्यत्र पो वः इति वः । ओअत्तं अवअत्तं अपवृत्तम् । ऋतोऽदित्यत्वम् । कगचादिना वलोपः । 'ओत्वं वा स्यान्निरो

माल्ये क्वचिदोत्वमुपस्य वा' । ओमल्लं निर्माल्यम् । अधो मनयामिति यलोपः । पक्षे णिम्मल्लं । अदातो यथादिषु वेत्यत्वम् । रलोपे कृते शेषादेशादिना मस्य द्वित्वम् । ओहसिअं उपहासितम् । पक्षे उवहासिअम् । पो व इति वः । 'लुग्वा दुरुपसर्गस्य विसर्गस्य क्वचिद् भवेत्' । दुल्लहो दुर्लभः । खघथादिना भस्य हः । विसर्गलोपादन्यत्र सर्वत्र लवरामिति रलोपः । शेषादेशादिना लस्य द्वित्वम् । दुसहो दूसहो दुःसहः । अत्र तु विसर्गलोपादन्यत्र 'ऊदुतः सविसर्गस्य दुःसहादौ विकल्प्यते' इत्यूत्वम् ॥ २१ ॥

सुबोधनी ।

अव अप इत्यनयोरुपसर्गयोरोकारादेशः स्याद्वा । ओआसो अवआसो अवकाशः । ओसरिअं अवसरिअं । 'ओत्वं वा स्यात् निरो माल्ये क्वचिदोत्वमुपस्य वा' । ओमल्लं णिम्मल्लं । ओहसिअं उवहसिअं उपहासितम् ॥ २१ ॥

# तल्त्वयोर्दात्तणौ ॥ २२ ॥

सञ्जीवनी ।

तल्त्वयोः प्रत्यययोः यथासङ्ख्यं दात्तणौ भवतः । रम्मदा रम्यता । रम्मत्तणं तुह मुहस्स हरेइ चित्तं ।

रम्यत्वम् । अधो मनयामिति यलोपः । शेषादेशादिना मस्य द्वित्वम् । तणुदा तणुत्तणं तनुता तनुत्वम् । 'वकारस्य च लोपोऽपि यथाप्राप्तः प्रवर्तते'। रम्मत्तं तणुत्तं रम्यत्वम् तनुत्वम् । यथाप्राप्तं सर्वत्र लवरामित्यनेन वलोपः । शेषादेशादिना तस्य द्वित्वम् ॥ २२ ॥

सुबोधनी ।

अनयोर्यथासंख्यमेतौ स्तः । रम्मदा रम्यता । रमत्तणं रम्यत्वम् ॥ २२ ॥

# क्त्व तूण ॥ २३ ॥

सञ्जीवनी ।

क्त्वेति लुप्तषष्ठ्यन्तम् । तूण इति लुप्तप्रथमान्तम् । क्त्वाप्रत्ययस्य तूण आदेशः स्यात् । हंतूण हत्वा । हन्तेर्नस्य नङोर्हलीति बिन्दुः । आणिऊण आनयनं पूर्वं कृत्वा आनीय । णीञ् प्रापणे इत्याङ् पूर्वस्य अइ आदेशा बहुलमित्यनेन ईकारस्य इत्वम् । तूणादेशस्य कगचादिना तलोपः । काउण कृत्वा । पूर्ववत् तलोपः । कृञः का भूतभविष्यतोश्चेति कादेशः । घेत्तूण गृहीत्वा । 'ग्रह उपादाने' इत्यस्य घेत् क्त्वा-

तुमुन्तव्येष्विति घेत् आदेशः। पूर्ववत्तलोपे कृते सन्ध्यावचामित्यादिना ऊकारसन्धिः। 'क्वापि क्त्वाप्रत्ययादेशो उआण इत्यपीष्यते'। घेतुआण। सोउआण गृहीत्वा श्रुत्वा। श्रू श्रवणे इत्यस्य ओ आदेशा बहुलामिति उकारस्यौत्वम्। सर्वत्र लवरामिति रलोपः। 'उं वाशब्दस्य वा देशः क्त्वास्थितस्य क्वचिद् भवेत्'। दट्ठुं दृष्ट्वा। ऋतोऽदित्यत्वम्। ष्टस्य ठ इति ठः। तस्य वर्गे युजः पूर्व इति टः। मोत्तुं मुक्त्वा। उपरि लोप इत्यादिना कलोपः। शेषादेशादिना तस्य द्वित्वम्। होउं भूत्वा। भू सत्तायामित्यस्य भुवो होहुवाविति हो आदेशः। वा इत्यस्य तुं आदेशे कृते कगचादिना तलोपः। 'असमासे अआदेशः क्त्वेत्यस्य प्रवर्तते'। जाणिआ ज्ञात्वा। ज्ञा अवबोधने इत्यस्य ज्ञो जाणमुणौ इति जाण अदेशः। ए च्च क्त्वादिना अकारस्य इत्वम्। पडिआ पतित्वा। पत्ऌ पतने इत्यस्य सादिपत्योर्डः इति तस्य डः। पूर्ववदित्वम्। ओसरिआ अपसृत्य। ओदवापयोरित्योत्वम्। सृ गताविति सृधातोः ए च क्त्वादिना अकारस्य इत्वम्। पूर्ववदन्यत्। प्रायः शब्दः कगचादीनां लोपातिव्याप्तिबाधक इत्येतेषु उदाहरणेषु कगचादिना लोपो यादृच्छिकः॥ २३॥

सुबोधिनी।

एते लुप्तषष्ठीप्रथमान्ते पदे। क्त्वाप्रत्ययस्य तूण इत्यादिश्यते। घेत्तूण गृहीत्वा। 'क्वापि क्त्वाप्रत्ययादेश उआण इति दृश्यते'। घेत्तुआण गृहीत्वा। सोउण श्रुत्वा। 'उं वाशब्दस्य वादेशः क्त्वास्थितस्य क्वचिद् भवेत्'। दट्ठुं दृष्ट्वा। मोत्तुं मुक्त्वा। होउं भूत्वा। 'असमासे इआऽऽदेशः क्त्वा इत्यस्य प्रवर्त्तते'। जाणिअ ज्ञात्वा। पडिअ पतित्वा परिहरिअ परिहृत्य। ओसरिअ अपसृत्य॥ २३॥

# तृन इर शीले॥ २४॥

सञ्जीवनिः।

शील इत्युपलक्षणम्। तच्छीलतद्धर्मतत्साधुकारिष्वर्थेषु उत्पन्नस्य तृन्प्रत्ययस्य इर आदेशः स्यात्। घोलिरं घूर्णितुं शीलमस्य इत्याद्यर्थे उत्पन्नस्य तृन इर आदेशः। अत् घूर्णो घोलघुम्मौ इति घोलादेशः। एवं जंपिरं जल्पितुं शीलमस्य जल्पितृ। जल्पे लो मः इति मः। विविरं वेपितुं शीलमस्येति वेपितृ। टुवेपृ कंपने। पो वः। ननु शीलाद्यर्थमन्तरेण तृण उत्पत्तिर्नास्ति तत् किं शील इत्यनेन? स्वरूपस्यैव द्योतनार्थम्॥ २४॥

सुबोधिनी ।

ताच्छील्ये उत्पन्नस्य तृन्प्रत्ययस्य इरादेशः स्यात् । शील-मित्युपलक्षणम् । तेन तद्धर्मतत्साधुत्वकारित्वयोर्ग्रहणम् । नन्वेवं शीलं इत्यव्यावर्तकं शीलाद्यर्थमन्तरेण तृन्प्रत्ययाऽनुत्पत्ते-रिति किं शील इत्यनेन ? स्वरूपस्यैव द्योतनार्थम् । घोलिरं घूर्णितुं शीलमस्येति घूर्णितृ ॥ २४ ॥

# आल्विल्लोल्लालवन्तेन्ता मतुपः ॥ २५ ॥

सञ्जीवनी ।

मतुप इति मतुबादयो गृह्यन्ते । तेन तदस्यास्त्य-स्मिन्नर्थे विहितानां मतुबादीनां स्थाने यथादर्शनं आलु इल्ल उल्ल आल वन्त इन्त इत्येते आदेशा भवन्ति । आलुस्तावत्-ईसालू ईर्ष्यावान् । सर्वत्र लवरामिति अधो मनयामिति यरयोर्लोपः । शषोः स इति षस्य सः । तस्य द्वित्वं न भवति । 'विन्द्वादी-र्दुत्परस्येह द्वित्वं शेषस्य नेष्यते' इति द्वित्वनिषेधात् । सन्धावचामित्यादिना अकारलोपः । सुभिस्सुप्सु दीर्घः । णेहालू स्नेहवान् । स्नेहे वेति विकर्षादन्यत्र ह्रस्नेत्यादिना स्नस्य ण्हादेशः । प्रतिलक्ष्यानुरोधात् ।

उपरि लोप इत्यादिना सलोपः। इल्लः—गहिल्लो ग्रहवान्। सणेहिल्लो स्नेहवान्। स्नेहे वेति सनयोः विकर्षः। पूर्वस्य च अत्वम्। सन्धावच्चामित्यादिना अकारलोपः। उल्लः–विआरुल्लं विकारवत्। विहारुल्लं विहारवत्। आलः-धणालं धनवत्। चोरालं चौरवत्। औत ओदित्योत्वम्। सन्धावात्वम्। वन्तः-जसवन्तो यशस्वी। आदेर्यो ज इति जः। अन्त्यस्य हल इति सलोपः। धणवन्तो धनवान्। धनी वा। इन्तो-घरइन्तो गृहवान्। गृही वा। गृहस्य घरोऽपताविति घर आदेशः। पुत्तइन्ता पुत्रवती। इन्त आदेशे कृते आदीतौ बहुलमिति आप्रत्ययः। 'अर्थे तस्येदमित्यस्मिन्नुल्ल इल्लस्तु तद्भवे'। अप्पुल्लं आत्मीयम्। अदातो यथादिषुवेत्यत्वम्। आत्मनि पः इति इति त्मस्य पः। तस्य शेषादेशयोर्द्वित्वमिति द्वित्वम्। गामेल्लिआ ग्रामे भवा ग्रामीणाः। तत्र भव इत्यर्थे प्रत्ययस्य इल्लादेशः। सन्धावचामित्यादिना अ इ इत्येतयोरेत्वम्। पुरिल्लं पुरोभवं पौरस्त्यम्। तत्र भव इत्यर्थे प्रत्ययः। अन्त्यस्य हल इति सलोपः। सन्धावकारलोपः। 'भवेतां मतुपोऽन्त्यस्य आकारस्तु तथा क्वचित्'। हणुमा हणुमन्तो हनुमान्। 'संख्यायाः कृत्वसो हुत्तं आभि-

मुख्येऽपि दृश्यते' । पंचहुत्तं पञ्चकृत्वः । छहुत्तं षट्कृत्वः । षट्शावकसप्तपर्णेषु छः इत्यनेन छः । सअहुत्तं शतकृत्वः । पिअहुत्तं प्रियाभिमुखम् । 'इत्तौ किं यत्तदेतेभ्यः परिमाणे त्तिअड्डहौ' । केत्तिअं केद्दहम् । किं परिमाणमस्य कियत् । किंशब्दे किमः क इति क आदेशः । जेत्तिअं जेद्दहं यावत् । आदेर्यो ज इति जः । तेत्तिअं तेद्दहं तावत् । ए च शय्यादिषु इति आदेरत एत्वम् । एत्तिअं एद्दहं एतावत् । एतच्छब्दे त्तत्थयोस्तलोप इति तलोपः । त्रिष्वपि अन्त्यस्य हल इति दलोपः ॥ २५ ॥

## सुबोधिनी ।

तदस्यास्त्यस्मिन्नित्यर्थे विहितप्रत्ययानां सर्वेषां ग्रहणम् । मतुप्पदेन मतुबादीनां यथादर्शनं अल्वादय आदेशाः स्युः । ईसालू ईर्ष्यावान् । णेहालू स्नेहवान् । गहेल्लो गृहवान् । सिणेहिल्लो स्नेहवान् । विआरुल्लं विकारवत् । विहारुल्लं विहारवत् । चोरालं चौरवत् । वणालं वनवत् । जसवन्तो यशस्वी । धणवन्तो धनवान् धनी वा । घरइन्तो गृहवान् गृही वा । पुत्तइन्ता पुत्रवती । 'अर्थे तस्येदमित्यस्मिन्नुल्ल इल्लस्तु तद्भवे' । अप्पुल्लो आत्मीयः । गामेल्लिआ ग्रामीणा । पुरिल्लं पौरस्त्यम् । 'भवेतां मतुपोऽन्त्यस्य न्तआकारस्तथा क्वचित्' । हणुमन्तो हणुमा हनुमान् । 'संख्यायां कृत्वसो हुत्तमाभिमुख्येऽपि दृश्यते' । पञ्चहुत्तं पञ्चकृत्वः । छहुत्तं षट्

क्खुत्तः । सअहुत्तं शतकृत्वः । पिअहुत्तं प्रियाभिमुखम् । घरहुत्तं गृहाभिमुखम् । 'इदृौ किंयत्तदेतेभ्यः परिमाणे त्तिअदहौ'। केत्तिअं केद्दहं कियत् । जेत्तिअं जेद्दहं यावत् । तेत्तिअं तेद्दहं तावत् । एत्तिअं एद्दहं एतावत् ॥ २५ ॥

# स्वार्थे को वा ॥ २६ ॥

सञ्जीवनी ।

अस्मिन्नर्थे प्रातिपदिकात् कप्रत्ययो भवति वा । भमरओ भ्रमर एव भ्रमरकः । पक्षे भमरो । कसणओ कृष्ण एव कृष्णकः । पक्षे कसणो । ऋतोऽदित्यत्वम् । कृष्णे वेति षणयोर्विकर्षः । पूर्वस्य चकारः । एवं चन्दओ चन्द्रकः । पक्षे चन्दो । द्रे रो वेति रेफलोपः । गअणांअणअं गगनाङ्गणकम् । सर्वत्र प्रत्ययस्य कगचादिना कलोपः । इत्यादयः प्रयोगाः स्कन्धकादिषु बाहुल्येन द्रष्टव्याः ।

कुसुमाउहपिअदूअओ मउलाविअघणचूअओ ।
सिढिलिअमाणग्गहणओ वाहअइ दाहिणपवणओ ॥

'वेष्यते स्वार्थे इल्लोल्लौ आभ्यां कः स्वार्थ एव वा'। सच्चं सच्चिल्लं सच्चिल्लअं सत्यम् । त्यथ्यद्यां चछजा इति त्यस्य चः । तस्य शेषादेशादिना द्वित्वम् । कगचादिना लोपः । नपुंसके सोर्बिन्दुरिति बिन्दुः । करहो

करहुल्लो करहुल्लओ करभकः । खघथादिना भस्य हः । पूर्ववत् कलोपः । अत ओत् सोरित्योत्वम् । क्वचिदपि लोप इत्यलोपः । एवं भमरो भमरुल्लो भमरुल्लओ भ्रमरकः । सर्वत्र इल्लउल्लप्रत्यययोः कृतयोः सन्धावकारलोपः । 'स्वार्थे कः स्यात् डकारोऽपि को वा तस्मादपि स्मृतः' । पुत्तो पुत्तडो पुत्तडओ पुत्रकः । वच्छो वच्छडो वच्छडओ वत्सकः । थ्यत्सप्सां छ इति त्सस्य छः । तस्य द्वित्वे वर्गे युजः पूर्व इति चः । हत्था हत्थडा हत्थडआ हस्तौ । हस्तशब्दात् द्विवचनस्य बहुवचनं नित्यमिति जस् प्रत्ययः । तस्य जश्शसोर्लोप इति लोपः । जस्शस् ङस्यांसु दीर्घ इति दीर्घः । स्तस्य थः इति थः । तस्य द्वित्वे वर्गे युजः पूर्व इति तः । 'द्वित्वापन्नो लकारोऽपि क्वचित् स्वार्थ इतीष्यते' । एक्कल्लो एकाकी एक्को एको वा । नीडादिष्विति कस्य द्वित्वम् । णवल्लो नवकः । स्वार्थ इत्यस्य उपलक्षणपरार्थत्वेनाभिमतत्वा-दज्ञातादिष्वर्थेषु प्रयोगोऽयं द्रष्टव्यः । तथा चोक्तं--

अज्ञाते कुत्सिते चाल्पे तथा ह्रस्वानुकम्पयोः ।
संज्ञायामपि विज्ञाद्भिः प्रत्ययोऽयं विधीयते ॥

तान्येवोदाहरणानि ॥ २६ ॥

सुबोधिनी ।

अस्मिन्नर्थे प्रातिपदिकात् को वा स्यात् । भमरओ भ्रमरकः । पक्षे भमरो । इत्यादयः प्रयोगा बाहुल्येन द्रष्टव्याः । यथा

कुसुमाउहपिअदूओ मउलाविअघणचूअओ ।
सिठिलिअमाणग्गहणओ वाहअइ दाहिणपवणओ ॥

'वेष्यते स्वार्थ इल्लोल्लौ आभ्यां कः स्वार्थ एव वा' । सच्चं सच्चिल्लं सच्चिल्लअं सत्यम् । करहो करहुल्लो करहुल्लओ करभकः । भमरो भमरुल्लो भमरुल्लओ भ्रमरकः । 'स्वार्थे कः स्यात् डकारो वा को वा तस्मादपीष्यते' । पुत्तो पुत्तडो पुत्तडओ पुत्रकः। वच्छो वच्छडो वच्छडओ वत्सकः । हत्था हत्थडा हत्थडआ हस्तौ । 'द्वित्वापन्नो लकारोऽपि क्वचित् स्वार्थे इतीष्यते' । एक्कल्लो एकाकी एक्को वा । णवल्लो नवकः । स्वार्थ इत्युपलक्षणम् । तथा चोक्तम् ।

अज्ञाते कुत्सिते चाल्पे तथा ह्रस्वाऽनुकम्पयोः ।
संज्ञायामपि विद्वाद्भिः प्रत्ययोऽयं प्रकीर्त्तितः ॥ २६ ॥

# विद्युत्पीतयोर्लः ॥ २७ ॥

सञ्जीवनी ।

स्वार्थे इत्यनुवर्त्तते । वेति च । विद्युत् पीत इत्ये-

तयोः तस्मिन्नर्थे लप्रत्ययो वा भवति । पूर्वेण कः प्राप्तः । विज्जुला । त्यथ्यद्यां चछजा इति द्यस्य जः । तस्य शेषादेशात् द्वित्वम् । अन्त्यस्य हल इति तलोपः । आदीतौ बहुलमिति आप्रत्ययः । सन्धावात्वम् । पक्षे विज्जू । अत्र सुभिस्सुप्सु दीर्घ इति दीर्घः । पिअलं पीअं । कगचजादिना तलोपः ॥ २७ ॥

सुबोधिनी ।

एतयोः स्वार्थे लप्रत्ययो वा स्यात् । विज्जुली विज्जू । पीअलं पीअं ॥ २७ ॥

## वृन्दे दो वः ॥ २८ ॥

सञ्जीवनी ।

स्वार्थ इत्यनुवर्तते । वेति निवृत्तम् । द इत्यक्षरं पञ्चम्यन्तम् । वृन्दशब्दे दकारात् परः स्वार्थे वः प्रत्ययो भवति । अत्र अकारदकारयोर्मध्ये इत्यर्थः । वन्द्वं । ऋतोऽदित्यत्वम् ॥ २८ ॥

सुबोधनी ।

वृन्दे रः ॥ २८ क ॥

वृन्दशब्दे दकारादुत्तरं प्रातिपदिकात् पूर्वं रप्रत्ययः स्यात् । वन्द्रः ॥ २८ ॥

# करेण्वां रणोः स्थितिपरिवृत्तिः २९

## सञ्जीवनी ।

करेणुशब्दे रेफणकारयोः स्थितिपरिवृत्तिः स्थानव्यत्ययो भवति । एसा कणेरू हस्तिनी । सुभिस्सुप्सु दीर्घ इति दीर्घः । स्त्रीलिङ्गनिर्देशात् पुंसि न भवति । एस करेणू हस्ती । उभयत्र अन्त्यस्य हल इति सुलोपः ॥ ॥ २९ ॥

## सुबोधिनी ।

अत्र रेफणकारयोः स्थानव्यत्ययः स्यात् । एसा कणेरू हस्तिनी । स्त्रीलिङ्गग्रहणात् पुंसि न । एस करेणू हस्ती ॥ २९ ॥

# आलाने लनोः ॥ ३० ॥

## सञ्जीवनी ।

स्थितिपरिवृत्तिरित्यनुवर्तते । उत्तरत्र च । लकारे अकार उच्चारणार्थः । आलानशब्दे लकारनकारयोर्व्यत्ययः स्यात् । आणालो । 'स्थितयोः परिवृत्तिर्वा हरिताले लरेफयोः' । हलिआरो हरिआलो । कगचादिना तलोपः ॥ ३० ॥

सुबोधिनी ।

अत्र लनोः स्थानव्यत्ययः स्यात् । आणालं । 'स्थितयोः परिवृत्तिर्वा हरिताले लरेफयोः' । हरिआलो हलिआरो ॥ ३० ॥

## महाराष्ट्रे हरोः ॥ ३१ ॥

सञ्जीवनी ।

महाराष्ट्रशब्दे हकाररेफयोर्व्यत्ययः स्यात् । मरहट्ठो । ष्टस्य ठ इति ठः । अदातो यथादिषु वेति ह्रस्वः । द्वित्वे वर्गे युजः पूर्व इति टः ॥ ३१ ॥

सुबोधिनी ।

महाराष्ट्रे हरोः व्यत्ययः स्यात् । मरहट्ठो ॥ ३१ ॥

## बृहस्पतौ वहोः ॥ ३२ ॥

सञ्जीवनी ।

बृहस्पतिशब्दे वकारहकारयोर्यथासंख्यं भकारपकारादेशौ भवतः । भपप्फई । ऋतोऽदित्यत्वम् । स्पस्य फ इति फः । तस्य द्वित्वे वर्गे युजः पूर्व इति पः । कगचादिना तलोपः । सुभिस्सुप्सु दीर्घ इति

दीर्घः। केचित्तु भपस्सई इत्यपीच्छान्ति। तच्च 'क्वचित् सस्य क्वचित् पस्य लोपः शब्दस्य इष्यते'। इति पलोपः। शेषादेशादिना द्वित्वम्। अन्यत् समानम्॥ ३२॥

सुबोधनी।

अत्र क्रमेण वकारहकारयोर्भपौ स्याताम्। भपप्फई। केचित्तु भपस्सई इत्यपीच्छन्ति॥ ३२॥

# मलिने लिनोरिलौ वा॥ ३३॥

सञ्जीवनी।

मलिनशब्दे लिकारनकारयोर्यथासंख्यं इकारलकारादेशौ भवतो वा। मइलं मलिणम्॥ ३३॥

सुबोधिनी।

अत्रानयोरिकारलकारौ वा स्याताम्। मइलं मलिणं॥ ३३॥

# गृहस्य घरोऽपतौ॥ ३४॥

सञ्जीवनी।

गृहस्य घरादेशो भवति अपतौ परे। अनेकवर्णः सर्वस्येति वचनात्। घरं गृहम्। राअहरं राजगृहम्।

घरादेशे खघथादिना घस्य हः । घरसामी गृहस्वामी । अन्त्यस्य हल इति नलोपः । सुभिस्सुप्सु दीर्घः इति दीर्घः । अपताविति किम् ? गहवई गृहपतिः । ऋतोऽदित्यत्वम् ॥ ३४ ॥

सुबोधिनी ।

गृहशब्दे घरादेशः स्यात् पतिश्चेत् न परस्तात् । घरसामी गृहस्वामी । अपताविति किम् ? गहवई ॥ ३४ ॥

# दाढादयो बहुलम् ॥ ३५ ॥

सञ्जीवनी ।

श्रुतानुमित्यध्याहारैर्वाक्यार्थपरिकल्पनमिति दंष्ट्रादीनामित्याह्रियते । तेन दंष्ट्रा इत्येवमादीनां स्थाने दाढा इत्येवंरूपा निपात्यन्ते । प्रत्ययलोपागमवर्णविकारा ये लक्षणेनानुपपन्नाः ते निपातनात् साध्यन्ते इत्यर्थः । बहुलस्य क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिरित्यादिकोऽर्थोऽवगन्तव्यः । तथा क्वचिन्नित्यम्-

दंष्ट्राललाटपत्तीनां स्युर्भ्रुवो व्याकुलस्य च ।
दाढा णिडाल पाइक्क भुमआ वावलाः क्रमात् ।

क्वचिद्वा—

अथोवैदूर्यशुक्तीनां वधूभ्रमितशब्दयोः।
हेट्ठं वेरुल्लिअं सुप्पी अउज्झा चाथ भामिअम् ॥
दुहित्राकृष्टयोस्तद्वत् स्यात् श्वश्रूलेलिहानयोः
धूआ आअड्ढिअं चैव अत्ता लल्लक्कमेव च।
मण्डलीसमयेदानींनिलयानां भवन्त्यमी।
विंचिल्लिअं च अच्छुक्कं एण्हिं चाथ निहेलणं ॥
कडसी अवहोआसं श्मशानोभयपार्श्वयोः।
उत्पलस्य तु कंद्दोट्टं कोड्डं कौतूहलस्य च ॥
लज्जालुइणी चैव लज्जावत्यां निपात्यते।
शातवाहनशब्दस्य हालो शालाहणो तथा ॥
गोदावर्याश्च गोला स्यादित्याद्याः पाक्षिकाः पुनः।
अहो वेदुज्जअं सुत्ती वहाद्या एवमादयः ॥
मातृष्वसृपितृष्वस्रोरत इत्वं सलुक् ततः।
पक्षे च स्वसृशब्दस्य छा इत्येतन्निपात्यते ॥

माउस्सिआ पिउस्सिआ। 'मातृष्वसृपितृष्वस्रोरप्यात्वं स्यादतः सुपि'इति आत्वम्। माउच्छा पिउच्छा। इत्यादयोऽन्येऽपि निपाता आदृताः। केचित्तु दुःखश्रवः दुर्भाणिकोऽयमर्थ इति दुराधिगमत्वादिदोषदुष्टत्वेन सत्प्रयोगा अपि हेयाः। यथा—

भस्मभीष्मव्रजव्रात्यप्रेतप्रोक्ताग्निपाश्रितः।
वाक्यकुष्ठाक्षरादित्वात् एते नैतादृता बुधैः॥

आदिशब्दश्च प्रकारे। प्रकारः सादृश्यम्। तेन अन्येऽपि ये शब्दा इह सामान्यविशेषलक्षणाः संगृहीतविदर्भादिदेशगृहीतसम्बन्धाः महाकविपरम्पराविधीयमानाश्च दृश्यन्ते तेऽपि प्रायो लोपागमवर्णविकाररूपतया निरूप्यमाणा दाढादिवत् सङ्गच्छन्त एव। तथा चोक्तं–'यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यमिति'।

केचितु व्यवस्थावाचिनमादिशब्दं व्याचक्षते। तथा चोक्तं—

सामीप्येऽथ व्यवस्थायां प्रकारेऽवयवे तथा।
आदिशब्दं तु मेधावी चतुर्ष्वर्थेषु लक्षयेत्॥

तन्मतेनाथ अनुकारिविकारिभेदेन द्विविधं प्राकृतम्। तत्रानुकारिणस्तावत् विभक्तिविशेषपरिणाममात्रेण मनाक् ये संस्कृताद्भिद्यन्ते। हरिणं अरुणं लीला सारङ्ग सुन्दरी रामा इत्याद्याः संस्कृतसदृक्षाः। तथा क्वचन संस्कृतप्राकृतयो राजविदूषकयोः सदृशः पाठो यथा—

इह हि नववसन्ते मञ्जरीपुञ्जरेणु-
च्छुरणधवलदेहा बद्धवेला वसन्ति।

तरलमणिमयूरा हारिहुंकारकण्ठा
बहलपरिमलालीसुन्दरा: सिन्दुवाराः ॥
कुन्दं विहाय विमलं भसला वसन्ते ।
गन्धालयं बहुरसं कमलं भजन्ते ।
इन्दिन्दिरागुणमये गुणभालसा हि
मञ्जीरपुञ्जरमणीयरवा रमन्ते ॥

इह विकारिणस्तावत् आ समृद्ध्यादिषु वेत्यनेन प्रतिपादितश्चाग्रे प्रतिपादयिष्यमाणश्च तौ । तदुव्याप्तिमन्तरेण ये यावदुक्तास्तद्रूपा एव दाढादयः । प्राकृतस्य सर्वमेव संस्कृतं योनिः । यद्येवं तर्हि प्रकृतिः संस्कृतमिति यथा प्रतिपादितं तथा द्विविधमेव प्राकृतं भवितुमर्हति। ये तु इह उत्पलादीनां निपाता नानुकारिणो नापि विकारिणस्ते कथं प्राकृतत्वेन निर्दिश्यन्ते ? कथं वा तथा चेहइ बोलेइ देश्यामेवंविधाः क्रियाः ?

उक्तं च—

मरहट्ठदेस भासाअ संकइ जो राहिइस्सं देहिंइजा
गोहिअं पसिद्धं ।
सो दावेण णसावेइ कविअणचिर साइअं भणइं ॥

अथैवंविधानां प्राकृतत्वेनातिप्रसिद्धत्वात् पर्यनुयोगस्यानवकाश एव । तथा चोक्तं-'महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुरिति' ।

इदं सकलप्राकृतसाधारणलक्षणम् ।

ऐ औ स्फ ष्य ऋ ॠ ऌ ॡ प्लुतशषा बिन्दुश्चतुर्थी क्वचित
प्रान्ते हलङ्ञना: पृथक् द्विवचनं नाष्टादश प्राकृते ।
रूपं चापि यदात्मनेपदकृतं यद्वा परस्मैपदे
भेदौ नैव तयोश्च लिङ्गनियमस्तादृग् यथा संस्कृते ॥३५॥

इति प्राकृतसञ्जीविन्यां
संकीर्णविधिश्चतुर्थः परिच्छेदः ।

---

सुबोधीनि ।

श्रुतानुमित्यध्याहारैर्वाक्यार्थपरिकल्पनमिति न्यायात् दंष्ट्रा-दीनामित्यध्याह्रियते । दंष्ट्रादीनां स्थाने दाढादयः शब्दा निपात्यन्ते । क्वचित्प्रवृत्तिरित्यादिको बहुलशब्दार्थः । तथा च क्वचिन्नित्यम् ।

दंष्ट्राललाटपत्तीनां स्याद् भ्रुवो व्याकुलस्य च ।
दाढा लिलार पाइक्क भुमआ वाउलाः क्रमात् ॥

क्वचिद्वा ।

अधोवैदूर्यशुक्तीनां वधूभ्रमितशब्दयोः ।
हेट्ठं वेरुल्लिअं सिप्पी अउज्झा चाथ भामिअं ॥
दुहित्राकृष्टयोस्तद्वत् स्यात् श्वश्रूलेलिहानयोः ।
धूआ आअट्टिअं चैव अत्ता लल्लकमेव च ॥
मण्डलीसमयेदानींनिलयानां भवन्त्यमी ।




विचिल्लिअं च अच्छुक्कं एण्हिं वाथ णिहेलणं ॥
कडसी अवहोआसं श्मशानोभयपार्श्वयोः ।
उत्पलस्य तु कंदोट्टं कोड्डुं कौतूहलस्य च ॥
लज्जालुइणी चेति लज्जावत्यां निपात्यते ।
शालिवाहनशब्दस्य हालो शालाहणो तथा ॥
गोदावर्याश्च गोला स्यादित्याद्याः पक्षिकाः पुनः ।
अहो वेदुज्जअं सुत्ती सुखाद्या(?) एवमादयः ॥
मातृष्वसृपितृष्वस्रोरत इत्वं सलुक्ततः ।
पक्षे च स्वसृशब्दस्य छा इत्येतन्निपात्यते ॥

माउच्छा पिउच्छा । अत्र दाढादय इत्यादिशब्दः प्रकारे । प्रकारः सादृश्यम् । अथान्येऽपि ये शब्दा इह सामान्यविशेषलक्षणाः संगृहीतविदर्भादिदेशगृहीतसंबन्धा महाकविपरम्पराप्रयुज्यमाना दृश्यन्ते तेऽपि प्रत्ययलोपवर्णविकाररूपतया निरूप्यमाणा अत्र सङ्गच्छन्त एव । तथा चोक्तम् 'यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम्' । वस्तुतस्तु व्यवस्थायामेवादिशब्दः ।

नन्वेवं कथं मरहट्टादिशब्दानां बहूनां महाकविप्रयुक्तानां साधुता प्राकृतलक्षणाक्रान्तत्वात् इति तत्त्वातत्त्वानवबोधात् । तथाहि त्रिविधं प्राकृतमनुकारिविकारदेशीभेदात् । तत्राऽनुकारि संस्कृतसमं विभक्तिविशेषपरिणामादिमात्र—कृते वैलक्षण्यम् । हरिणवरुणवेला मञ्जरी पुंजकुंजमित्यादि ।

त्रिकारि संस्कृतोद्भवम्। आ समृद्ध्यादिषु वेत्यादिसूत्रजातलक्षितविकारं सामिद्ध्यादिपदम्। एतदुभयभिन्नं तत्तद्देशगृहीतसम्बन्धं महाकविप्रयुज्यमानं तद्देशीति निर्देश्यते तत्र। मरहट्टादिशब्दानामन्तर्भावः। अतएवाहुः 'तद्भवं तत्समं देशी त्रिविधः प्राकृतक्रमः' इति। न चैवं प्राकृतसंस्कृतयोरतिविशेषः तस्याऽनुकारिमात्रपरत्वात्। न च देशी संस्कृतादिवत् प्राकृताद्भिन्न एव प्रकार इति कस्यचिद्वचनं नादर्त्तव्यम्। 'महाराष्ट्राऽश्रयां भाषां प्रकृष्टं प्राकृतं विदुरिति' विरोधात् व्यवहारातिक्रमाच्चेति।

इदं तु सकलप्राकृतसाधारणम्—

ऐ औ ष्य स्फ ऋॠऌॡप्लुतशषा विंदुश्चतुर्थी क्वचित्
प्रान्ते हल्ङञना: पृथक् द्विवचनं नाष्टादश प्राकृते।
रूपं चाऽपि यदात्मनेपदकृतं यद्वा परस्मैपदे
भेदौ नैव तयोश्च लिङ्गनियमस्तादृग्यथा संस्कृते ॥ ३५ ॥

वृत्तौ प्राकृतसूत्राणां श्रीसदानन्दनिर्मितौ।
परिच्छेदः सुबोधिन्यां सङ्कीर्णोऽगात्तुरीयकः॥

## THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvali, Dravya section, by Padmanābha Miśra.

Ed. with Introduction and Index by Gopināth Kavirāj, M.A. Rs. 1–12

No. 2—The Advaita Chintāmaṇi, by Raṅgoji Bhaṭṭa, Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.

Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1–12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.

Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2–0

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.

Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1–4

No. 6—(Pārt I)–The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.

Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0–12

No. 6–(Part II)—Ditto Ditto Rs. 0–12

No. 7–(Part I)–Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.

Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1–4

No. 7—( Part II ) Ditto Rs. 1–8

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya, Rs. 0-10-6

No. 9—(Part 1)-The Bhakti Chandrikā,a Commentary on Sāṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed.with a PrefatoryNote by Gopināth Kavirāj,M.A. Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.Rs.1-2

No. 10-(Part-II)-The Siddhāntaratna by Baladeva Vidyābhūṣaṇa.
Ed. with Introduction by Gopinath Kaviraj, M. A.

No. 11-The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by Saṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0-9

No. 12-The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, by Āsādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-14

No. 15-(Part 1)-The Tripurārahasya. ( Jñāna Khaṇḍa)
Ed.with a Prefatory Note by Gopinath Kaviraj,M.A. Rs.0-14

No. 15-( Part-II )-The Tripurārahasya ( Jñānakhaṇḍa ) Ed. by Gopinath Kaviraj, M. A.

No. 16–The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1–2

No. 17–The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0–14

No. 18–(Part I)–The Gorakṣa siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0–14

No. 19–( Part. I )–The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjivani by Vasantarāja and the Subodhini by Sadānanda.
Ed. with Introduction etc. by Baṭuk Nath Sharma, M. A. and Baladeva Upādhyāya, M. A.

## THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1): its evolution, by Gaṅgānātha Jhā.

(b) The View point of Nyāya Vaiśeṣika Philosophy, by Gopi nathKaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 5

Vol. II—

(a) Paraśurāma Miśra ALIAS Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) Studies in Hindu Law (2):—its sources, by Gaṅgānāth Jha.

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha Sarmā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some aspects of Vīra S'aiva Philosophy,by Gopinath Kaviraj

(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G.A.Jacob.

(b) Studies in Hindu Law (3) Judicial Procedure: by Gaṅgā nātha Jha.

(c) Theism Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N, Pātankar. Rs. 5

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅgānātha Jhā.

(b) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda Prātiśākhya, by Maṅgala Deva Sāstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedi.

(e) Food and Drink in the Rāmāyanic Age, by Manmatha nātha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj,

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools by G.L. Sinha. Rs. 5

Vol. V.—( In progress )

To be had of—
The Superintendent, Government Press,
ALLAHABAD, U. P. (INDIA).